श्रीश्यामाचरणसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः १




श्रीमद्भागवतपुराणान्तर्गता

# भक्तिरत्नावलिः।

विष्णुपुरिकृतकान्तिमालाव्याख्यासहिता

केनचिद्भूतपूर्वसंस्कृताध्यापकेन सम्पादिता

प्रयागस्थपाणिनिकार्यालयेन प्रकाशिता च।

इंडियन प्रेस, प्रयागे मुद्रिता

१९१४

मूल्यं सार्धकं रूप्यकमेकम्।

THE

# ŚYÂMÂCHARAṆA SANSKRITA SERIES

No. I

# BHAKTIRATNÂVALÎ

WITH THE COMMENTARY

KÂNTIMÂLÂ BY VIṢṆUPURI

EDITED BY

A RETIRED PROFESSOR OF SANSKRIT

PUBLISHED BY

THE PÂNINI OFFICE, BHUVANEŚWARI ÂŚRAMA, BAHADURGANJ

Allahabad

PRINTED BY APURVA KRISHNA BOSE, AT THE INDIAN PRESS

1914

*Price Re. 1-8-0.*

# FOREWORD.

Shortly after the annexation of the Panjab, Babu Śyâmâ Charana Basu went to, and settled in, Lahore; and after serving a couple of years as Headmaster of the American Mission School there, entered the Government Service. When the Educational Department was established in the Panjab, he was selected to fill the important post of the Head Clerk. It was in that capacity that he had to organise that department, and worked hard for the spread of Education in that province. He zealously promoted the cause of Female Education to which Sir Robert Montgomery, on the eve of his retirement from the office of Lieutenant-Governor of the Panjab, bore testimony as follows:—

"Baboo Shama Charan of the Educational Department has always zealously supported the cause of Female Education. In testimony of which I give him this. I trust he will rise still higher in his own department. This certificate has been unsolicited by him.

*January 9th, 1865* (Sd.) R. MONTGOMERY."

Sir Donald McLeod, who succeeded Sir Robert Montgomery, was a renowned Oriental Scholar. He wanted to orientalize Education in the Panjab and wrote a letter to that effect to the Director of Public Instruction. It was due to Babu Śyâmâ Charan's influence, that the Panjab was saved that calamity. The Lieutenant Governor's letter was, however, at his suggestion, forwarded to the *Anjaman i-Panjab*, a literary Society that was, through his and Dr. Leitner's exertions, brought into existence. It was at a meeting of this society, that he suggested the formation of an institution which took the shape of the Panjab University.

On his death, which occurred in August 1867, at the early age of forty, the *Indian Public Opinion*, which was, at that time, conducted by Sir Lepel Griffin and Dr. Leitner, paid tribute to his memory as follows:—

"We deeply regret to hear of the death of Babu Shama Charan Bose, one of the most enlightened and respectable members of the excellent Bengali Colony, which we have in our midst at Lahore. The deceased gentleman took considerable interest in all matters affecting the welfare of his adoptive country and together with other Bengalis threw himself actively into all movements which some time ago reflected credit on this province. He was a Vedantist by persuasion, a most amiable man and an accomplished English scholar. As Head Clerk of the Educational Department much of the credit assigned to its Chief deservedly belongs to the well known native gentleman whose loss, we are sure, is sincerely felt in the community to which he belonged."

# विज्ञापनम् ।

पुरा पंचनदेषु इंग्लंडाधीश्वरेण विजितेषु तत्र प्रतिष्ठिते च तदुदारशासने, प्रजानामुपचिकीर्षया प्रधाननगरे लवपुरे शिक्षाविस्ताराय राजकीयो शिक्षाविभाग आस्थापितः। महती च तस्य धूर्महाधुरंधरे गुणशालिनि श्रीश्यामाचरणवसुमहोदये निचिक्षिपे गुणपक्षपातिभीराजपुरुषैः। तेन च महाभागेन शिक्षाविभागं सर्व्वथैव संवर्द्धयता पंचनदेषु विश्वविद्यालयस्थापनस्य प्रस्तावः समुत्थापितः। तस्मिंश्च प्रदेशे देवभाषासमुन्नति स्त्रीशिक्षाविस्तार-भारतीयधर्मप्रवृद्धि-तत्परः सफलप्रयासश्च, स्वयमपि वेदान्ततत्त्वनिष्णात--निर्म्मलहृदयः बहूनुपाकरोत्। मनस्विनश्च तस्य पितृचरणानुरागिणोस्तद्गौरवानुप्राणितयोः पुत्रयोः ज्यायान् वाणीशोऽपि श्रीमान्-श्रीशचंद्रः बहुभाषाभिज्ञः शास्त्रपारंगतः स्वगुणग्रामार्ज्जितरायबहादुरोपाधिः अधुना बदायूँ स्थप्रादेशिकन्यायासनमलंकरोति परमवैदान्तिकः। कनीयांश्च आई-एम् एस्-पदभूषितः संलब्धमेजरोपाधिकः समाप्तराजकार्यकालः सानुवादहिन्दूशास्त्रग्रन्थसम्पादको ज्ञानप्रांशुः श्रीमान् वामनदासः। स चाधुना महता प्रयत्नेनामुद्रांकितानि दुर्लभप्रायाणि हस्तलिखितानि गीर्वाणवाणीपुस्तकानि संगृहीत्य श्रीश्यामाचरण-संस्कृत-ग्रंथावलि-नाम्ना मुद्रापयितुं प्रकाशयितुं च समारब्धवान्।

तस्याः श्रीश्यामाचरण-संस्कृतग्रंथावले—

रयं प्रथमो ग्रन्थः—

इति

व्यवस्थापकः

पाणिनिकार्यालयः।

## शुद्धिपत्रम्

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | ६ | निरुपमो | निरूपणो |
| ,, | २० | ( कुटुंब ) | कुटुंब |
| ७ | २७ | तद्रूपे | तद्रूपे |
| ८ | १८ | भक्तेभ्या | भक्तेभ्यो |
| १४ | २४ | अर्जुनेः | अर्जुनैः |
| १६ | १८ | यशोदायारज्जुन | यशोदायारज्जु |
| १७ | ५ | क्लेशलव | क्लेशल |
| १८ | १ | अविद्दद | अविद्दद् |
| २१ | २६ | इत्यथः | इत्यर्थः |
| २२ | १५ | माश्चर्येण | माश्चर्येण |
| २३ | ५ | चित्ताद्रवस्तत्त | चित्तं द्रवते त |
| २४ | २ | निक्लिष्टानि | क्लिष्टानि |
| २५ | १ | तंत्र | तंत्रः |
| ,, | २४ | दायतः | दयितः |
| २६ | ८ | तनुजन्म | तज्जन्म |
| ,, | २३ | कम्म | कर्म्म |
| ,, | ,, | मुखत्वे | मुखत्वेन |
| २८ | ६ | मुक्त | भुक्त |
| ३१ | ४ | तत् | सत् |
| ,, | ५ | प्रति | रति |
| ३५ | ३० | पाटो | ० |
| ३७ | १ | मय | मयी |
| ३८ | १ | स्वल्प | स्वल्प |
| ,, | १२ | जलेन | जले न |
| ,, | २२ | तृणाधि | तृणादि |
| ४३ | १५ | पश्चादर्थेते | पश्चादर्प्यते |
| ४४ | १ | प्ये | प्ये |
| ४५ | १६ | मेधि तया | मेधितया |
| ४६ | १८ | लाभ | लाभं |
| ५१ | २ | सितै | सि तै |
| ५२ | १५ | उत्तमश्लो | उत्तमश्लो |
| ६४ | ८ | नृपनि | नृप नि |
| ,, | १२ | वमित्यक्तव्यर्थ | वक्तव्यमित्यर्थः |
| ६५ | ११ | यत्क्र | यत क्र |
| ६७ | १ | हास्यां | हास्यं |
| ,, | ७ | ज्वारा | ज्वरा |
| ६८ | २५ | य | यं |
| ८३ | ६ | चन | चनं |
| ८४ | २४ | लेश | लेशं |
| ८५ | १ | त्तहि | त्तर्हि |
| ८६ | १ | निर्द्ध | निर्द्ध |
| ८७ | ६ | ( ७ । ११ | ( ७ । ६ |
| १०० | ७ | पोप्याः | पोप्याः |
| १०१ | २३ | वधर्शे | वधदर्शे |
| १०२ | ६ | कीयंस्त | की यं स्त |
| १०३ | २४ | त्वमपि | त्वेऽपि |
| ,, | २७ | कुल | कुलं |
| १०४ | १३ | ० | बङ्गदेशीयमुद्रित-पुस्तके एते अधिकाः श्लोका दृश्यन्ते |

## शुद्धिपत्र ।

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ३ | १६ | १८६३ | १८७३ |
| ६ | १६ | वर देनेवाले | वरदेनेवाले |
| १५ | २८ | वै भयं | वैभयं |
| २६ | २३ | विभूत | विभूति |
| ,, | ३२ | मेंढकी | मेंडकी |
| ३२ | १७ | को | का |
| ३७ | २ | पृथिवी के गुणों | पृथिवी के रजःकणों |
| ४३ | १ | जा | जो |
| ,, | १४ | त्रिलोक | ० |
| ,, | १७ | का | ० |
| ४७ | २ | स्वामीजी | स्वामीजी |

# श्रीभक्तिरत्नावली

## श्री गोपीनाथाय नमः ॥

### दशमे श्रीशुकवाक्यम्

जयति जननिवासो देवकीजन्मवादो-
यदुवरपरिषत्स्वैर्दोर्भिरस्यन्नधर्म्मम् ।
स्थिरचरवृजिनघ्नः सुस्मितश्रीमुखेन
व्रजपुरवनितानां वर्द्धयन् कामदेवम् ॥ १ ॥

( भागवत १० । ९० । ४८ शुकः )

श्री गोपीनाथाय नमः ॥

ये मुक्तावपि निस्पृहाः प्रतिपदप्रोन्मीलदानंददां
यामास्थाय समस्तमस्तकमणिं कुर्वंति यं स्वे वशे ।
तान् भक्तानपि तां च भक्तिमपि तं भक्तप्रियं श्रीहरिं
वंदे सन्ततमर्थयेऽनुदिवसं नित्यं शरण्यं भजे ॥ १ ॥

सत्सदाचारानुमितं श्रुतिबोधितप्रारिप्सितनिर्विघ्नपरिसमाप्तिकारणं श्रीकृष्णकीर्तनरूपं मंगलमाचरति श्रीभागवतपद्येनैव। जयतीति । जनानां प्राणिनां निवासः स्थानं स्वस्वरूपमिति यावत् विश्वरूपत्वात् य एको विभाति स्वतः शुद्धचेताः प्रकाशस्वरूपोपि नानेवधीषु । शरावोदकस्थो यथा भानुरेकः स नित्योपलब्धिस्वरूपो महात्मा । त एव वा निवासो यस्य सर्वगुहाशयत्वमिति श्रुतेः यद्वा । नितरां वासः शरणं तेषामितिवार्थः । कृष्णत्वं स्पष्टयन्नाह । देवक्यां जन्मेति वादः प्रसिद्धिर्यस्य न वास्तवं जन्मेति भावः अजत्वात् । यदुवराः परिषदः सभा सेवकरूपा यस्य । अवतारप्रयोजनमाह । दोर्भिर्बाहुभिरधर्म्मं अस्यन् तन्मूलदुष्टदैत्यादिवधादस्यन् क्षिपन् चतुर्भुजत्वं इच्छाधीनमित्याह । स्वैरिति स्वैः स्वकीयैः । यद्वा । स्वैःस्वभक्तैरर्जुनादिभिर्दोर्भिरिव दोर्भिरित्यर्थः ॥ १ ॥

यत्कीर्तनं यत्स्मरणं यदीक्षणं यद्वन्दनं यच्छ्रवणं यदर्हणम् ।
लोकस्य सद्यो विधुनोति किल्बिषं तस्मै सुभद्रश्रवसे नमो नमः ॥२॥

( २ । ४ । १५ शुकः )

एवमेवं समर्थस्य मद्विघ्ननिवारणमीपत्करमिति दर्शितं संबंधमात्रेण सर्वतापनिवारक इत्याह। स्थिराः स्थावराः चरा जंगमास्तेषां वृजिनं पापं हंतीति। वृंदावननुलतापक्षिमृगादितापत्रयनिवारक इत्यर्थः। विलासवैदग्ध्यलावण्यादि। निरपेक्षप्रेमाधीनत्वमाह व्रजेति। विषयांतरकामापेक्षया कृष्णविषयः कामः परमानंदप्रदत्वात्। दीव्यतीति देवस्तं स्वविषयप्रीतिदार्ढ्यार्थं वर्द्धयन् एवं विशिष्टः श्रीकृष्णो जयति सर्वोत्कर्षेण वर्तत इत्यर्थः। अथैतद् ग्रंथप्रतिपाद्यनानाविधविष्णुभक्तिमहिमानं दर्शयन् नमस्काररूपं मंगलमाचरति। यत्कीर्तनमिति। ईक्षणं जगन्नाथप्रतिमादिषु। अर्हणं पूजा एतानि सद्यः कल्मषं विधुन्वंतीत्यन्वयः। लोकस्य मनुष्यमात्रस्य। एतेन सर्वेषां श्रवणाद्यधिकार इति दर्शितम्। सुभद्रं श्रवो यशो यस्य अतो नान्येषां यज्ञदेवादीनां कीर्तनादिमात्रं तथा सर्वस्य सद्यः सुमंगलम् ॥ २ ॥

भूयो नमः सद्वृजिनच्छिदेऽसतामसंभवायाखिलसत्त्वमूर्तये।
पुंसां पुनः पारमहंस्यआश्रमे व्यवस्थितानामनुमृग्यदाशुषे ॥३॥
(२।४।१३ शुकः)

नमस्कार प्रचयमभिप्रेत्याह। भूय इति सतां भक्तानां वृजिनं पापं दुःखं वाछिनत्तीति तथाऽसतां अभक्तानां असंभवाय विनाशकाय नन्वयमेव किमिति पुनर्नमस्क्रियते इत्याशंक्याह। अखिलसत्त्वमूर्तये सर्वात्मने तथा चान्यनमस्कारोऽप्यतन्नमस्कार एवेतिसाक्षात्स एव किन्न नमस्करणीय इतिभावः। शुद्धसत्त्वगुणाश्रयाय वा तथा च ज्ञानप्रदत्वात्स एव वंद्य इत्यर्थः। अतएव पारमहंस्ये प्रत्यक्निष्ठारूपे अंतर्मुखे आश्रमे व्यवस्थितानां पुंसामनुमृग्यं यत्तन्निरसनेन यदन्वेषणीयं आत्मतत्त्वं तस्य दाशुषे दात्रे ॥ ३ ॥

श्रियः पतिर्यज्ञपतिः प्रजापतिर्धियांपतिर्लोकपतिर्धरापतिः।
पतिर्गतिश्चांधकवृष्णिसात्वतां प्रसीदतां मे भगवान्सतां गतिः ॥४॥
(२।४।२० शुकः)

सर्वेश्वरत्वमनुसरन्प्रार्थयते। श्रियःपतिरिति गतिः रक्षकः। प्रसीदतां प्रारिप्सितसिद्धिर्यथा स्यात्तथा ॥ ४ ॥

यः स्वानुभावमखिलश्रुतिसारमेकमध्यात्मदीपमतितितीर्षतां तमोन्धम्।
संसारिणां करुणयाह पुराणगुह्यं तं व्याससूनुमुपयामि गुरुं मुनीनाम् ॥५॥
(१।२।३। सूतः)

अथ भागवताचार्यं शुकं स्तौति। यः स्वानुभवमिति। स्वः निजः असाधारणः सद्यो भगवद्भक्तिप्रदत्वादिरूपोनुभावो महिमा यस्य तत्।

अतएव अखिलश्रुतीनां सारं अत एकं श्रेष्ठं अतः पुराणानां मध्ये गुह्यं गोप्यं श्रीभागवतं संसारिणामंधतमः अतिदुस्तरं संसाराख्यं अतितितीर्षतामुत्तरितुमिच्छतां कृते अध्यात्मदीपं साक्षादात्मप्रकाशकं करुणया आह। अतएव मुनीनां गुरुं आश्रयामि ॥ ५ ॥

## विष्णुपुरीवाक्यम् ॥ ५

दूरान्निशम्य माहिमानमुपेत्य पार्श्वमन्तः प्रविश्य शुभभागवतामृताब्धेः ।
पश्यामि कृष्णाकरुणाञ्जननिर्म्मलेन हृल्लोचनेन भगवद्भजनं हि रत्नम् ॥६॥

इह खलु सकलपुरुषार्थमर्थयमानानां तदुपायमनुसरतां भगवद्भक्तिमेव परमोपायत्वेन स्वतः पुरुषार्थत्वेन च । श्रीभगवान् वेदव्यास उपनिबबंध । अन्यनिबंधनंतु भक्तिनिरुपमोपकरणमेवेत्याशयेन तत्परश्लोकसंग्रहहिलः स्वयं चतुर्भिः प्रतिजानीते॥ तत्र स्वज्ञानमाह । दूरादिति । पार्श्वं उपेत्य अधीत्येत्यर्थः । अंतः प्रविश्य सरहस्यं बुध्वा ॥ ६ ॥

तदिदमतिमहार्घं भक्तिरत्नं मुरारेरहमाधिकसयत्नः प्रीतये वैष्णवानाम् ।
हृदिगतजगदीशादेशमासाद्य माद्यन्निधिवरमिव तस्माद्वारिधेरुद्धरामि ॥ ७ ॥

प्रतिजानीते तदिदमिति । अंतर्य्यामि प्रेरणं दर्शयन् धौद्धत्यं परिहरति हृदिगतेति तस्माद्भागवताख्यात् ॥ ७ ॥

कंठे कृता कुलमशेषमलंकरोति वेश्मस्थिता निखिलमेव तमोपहंति ॥
तामुज्ज्वलां गुणवतीं जगदीशभक्तिरत्नावलीं सुकृतिनः परिशीलयंतु ॥८॥

ग्रन्थप्रयोजनं कैमुतिकन्यायेनाह कंठेति गुणवतीं गुणा भगवति प्रेमप्रदत्वादिरूपः तद्युक्ताम् । पक्षे गुणः सूत्रं । यस्याः कंठे वेश्मधारणेनापि तादृशं हितं तत्र श्रवणविचारणादिना परिशीलनेन हितं भवतीति किंवाच्यम् ॥ ८ ॥

निखिलभागवतश्रवणालसा बहुकथाभिरथानवकाशिनः ।
अयमयं ननुताननु सार्थको भवतु विष्णुपुरीग्रथनग्रहः ॥ ९ ॥

नन्वत्र भागवतमेवास्ति कृतं त्वत्प्रयत्नेन किं तत्राह । निखिलेति । अनलसा अपि आवश्यक (कुटुंब) पोषणव्यवसायकथाभिः अनवकाशः अवकाशाभावो येषान्तेऽनवकाशिनः तांस्तु लक्षीकृत्य अयमयमिति वर्तमानसान्निध्य दर्शयति विष्णुपुरी तैरभुक्तः संन्यासी अहमेव । तस्य ग्रंथनग्रहः नानाप्रकरणस्थश्लोकानामेकवाक्यतया लिखन् प्रयत्नः सार्थको भवतु भविष्यतीत्यर्थः ॥ ९ ॥

### प्रथमे सूतवाक्यम् ।

स वै पुंसां परो धर्म्मो यतो भक्तिरधोक्षजे ।
अहैतुक्यप्रतिहता ययात्मा सुप्रसीदति ॥ १० ॥

(१।२।६ सूतः)

---

अयमेव इति पाठान्तरम् ।

एवं स्वयं चतुःश्लोक्या अभिधेयप्रयोजनसंबंधान् दर्शयित्वा सामान्यतो विशेषतः साधूनां भक्तिं निरूपयिष्यन् प्रथमं तावद्भक्तिसामान्यविरचनमवतारयितुं सर्वे स्वस्वधर्मा भक्तिमुखनिरीक्षका इत्याह । स वै पुंसामिति । अहैतुकी फलाभिसंधिवर्जिता । अप्रतिहता निरंतरा अव्यभिचारिणी च । आत्मा मनः प्रसीदति सत्वप्रधानं भवति ततश्च तत्त्वज्ञानोदय इतिभावः । अतएवाह । पर इति ॥ १० ॥

वासुदेवे भगवति भक्तियोगः प्रयोजितः ।
जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम् ॥ ११॥

( १ । २ । ७ सूतः )

ननु तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषंति यज्ञेन दानेन तपसाऽनाशकेन इत्यादिश्रुतिभ्यो धर्मस्य ज्ञानाङ्गत्वं प्रसिद्धम् । तत्कुतो भक्तिहेतुत्वमुच्यते सत्यं तत्तु भक्तिद्वारेणेत्याह । तदेवाह वासुदेव इत्यनेन । भक्तिरेव योगः प्रयोजितः कृतः वैराग्यविषयेषु ज्ञानं आत्मतत्त्वविषयं अहैतुकं हेतुशून्यं शुष्कतर्काद्यगोचरम् । औपनिषदमित्यर्थः । तथा च श्रेयोर्थिभिः वासुदेवभजनमेव कृत्यमिति भावः ॥ ११ ॥

प्रथमे सूतवाक्यं शौनकं प्रति ।

सत्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते ।
स्थित्यादये हरिविरिंचिहरेतिसंज्ञाः श्रेयांसि तत्र खलु सत्वतनोर्नृणां स्युः ॥१२॥

( १ । २ । २३ सूतः )

ननु वासुदेव एव किमिति भजनीय इत्यत आह । सत्त्वमिति यद्यपि इह सर्गे एक एव विष्णुहर्यादिसंज्ञात्रयं धत्ते इति त्रयोपि तुल्यमुपास्याः तथापि श्रेयांसि सत्वतनोः केवलसत्वशरीराद्वासुदेवादेवस्युः श्रेयसो ज्ञानसाध्यत्वात् । ज्ञानस्य च सत्त्वसाध्यत्वात् । सत्वात्संजायते ज्ञानं इति भगवद्गीतायाम् । विरिंचि हरयोरपि सत्वसंबंधित्वात् अत्र सत्वस्यैव कैवल्यम् । अम्भक्षो वायुभक्ष इतिवत् द्रष्टव्यम् । तस्मात्साधुनियमितं वासुदेवे भगवतीति ॥ १२ ॥

अतो वै कवयो नित्यं भक्तिं परमया मुदा ।
वासुदेवे भगवति कुर्वन्त्यात्मप्रसादनीम् ॥ १३ ॥

( १ । २ । २२ सूतः )

अत्र सदाचारं प्रमाणयति अत इति । यतः वासुदेवादेव श्रेयो भवति अतएव निश्चये । तथात्मप्रसादनी भक्तिर्वासुदेवादेव यतः अतो देवतांतरस्त्याज्य इत्याह ॥ १३ ॥

मुमुक्षवो घोररूपान् हित्वा भूतपतीनथ ।
नारायणकलाः शांता भजन्ति ह्यनसूयवः ॥ १४ ॥

( १ । २ । २६ सूतः )

मुमुक्षव इति घोररूपान् भूतादीन् भूतपतीन् अथ लोकपालानपि श्राद्धवलिपूजाद्यकरणे अनिष्टकारित्वात् । बह्वायासेप्यल्पदातृत्वाच्च घोररूपास्ते । कलाः अवतारान् । अनसूयवः देवांतरा निंदकाः । मुमुक्षव इत्यनेन भक्तिसाध्यज्ञानस्य फलं मोक्षो दर्शितः । तत्र मुमुक्षव इव इत्युपलक्षणम् ॥१४॥

द्वितीये श्रीशुकवाक्यम् ॥

अकामः सर्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन भजेत पुरुषं परम् ॥ १५ ॥

( २ । ३ । १० शुकः )

तस्मात्सकामोऽकामो वा विवेकी तमेव भजेत इत्याह अकाम इति तीव्रेण व्यभिचारादिदोषरहितेन ॥ १५ ॥

वासुदेवपरा वेदा वासुदेवपरा मखाः ।
वासुदेवपरा योगा वासुदेवपराः क्रियाः ॥१६॥
वासुदेवपरं ज्ञानं वासुदेवपरं तपः ।
वासुदेवपरो धर्म्मो वासुदेवपरा गतिः ॥१७॥

( १ । २ । २८—२९ सूतः )

श्रेयेर मार्गांतरमपि वासुदेवपरमेवेत्याह द्वाभ्याम् वासुदेवपरा इत्याभ्याम् । मखानां वासुदेवार्पणार्थत्वेन वासुदेवपरत्वम् । तत्प्रतिपादका वेदा वासुदेवतात्पर्यका एव । तथा च गीतासु । वेदैश्च सर्वैरहमेव वेद्य इति । आसनप्राणायामादिक्रियाणां तत्ज्ञानोपायत्वेन तत्परत्वे योगशास्त्रमपि तत्परमेव । ज्ञानस्य तद्विषयत्वेन तत्परत्वे ज्ञानशास्त्रमपि तत्परम् । तपः पदं ज्ञानपरं प्रकरणात् तपोवत् ज्ञानस्यापि शुद्धिहेतुत्वात् स्वर्गादीनां तदानंदांशरूपत्वात् तत्परत्वे तदर्थकधर्मशास्त्रमपि तत्परमेव । गतिर्गम्यते इति गतिः स्वर्गादिः यद्वा वेदानां तत्परत्वे तत्प्रतिपाद्यानां मखयोगादीनां तत्परत्व अत्र तपस्तप एव ॥ १६–१७ ॥

प्रथमे नारदवाक्यम् ॥

यमादिभिर्योगपथैः कामलोभहतो मुहुः ।
मुकुंदसेवया यद्वत्तथात्माद्धा न शाम्यति ॥१८॥

( १ । ६ । ३६ नारदः )

अतएव तत्पराणां एतेषां सामर्थ्ये हेतुं दर्शयति यमादिभिरिति । आत्मा मनः यद्वत् यथा मुकुंदसेवया तथा यमादिभिर्न शाम्यति अद्धा साक्षात् यमादीनां मनः शोधकत्वेपि भक्तिमुखनिरीक्षकत्वादिति भावः । योगपथैरित्युपलक्षणं कर्मादिपथैरित्यपि द्रष्टव्यम् ॥ १८ ॥

प्रथमे सूतवाक्यम् ॥

भक्तियोगेन मनसि सम्यक् प्रणिहितेऽमले ।
अपश्यत्पुरुषं पूर्णं मायां च तदुपाश्रयाम् ॥ १६ ॥

(१।७।४ सूतः)

अत्रापि भक्तिरेव फलमित्यत्र फलमेव प्रमाणमिति सूतवाक्येनाह । भक्तियोगेति । भक्तियोगेन अमले शुद्धे अतएव प्रणिहिते निश्चले अपश्यत् वेदव्यासः ॥ १९ ॥

तृतीये कपिलदेवः मातरं प्रति ।

देवानां गुणलिंगानामानुश्राविककर्मणाम् ।
सत्वे एवैकमनसो वृत्तिः स्वाभाविकी तु या ॥ २० ॥
अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी ।
जरयत्याशु या कोशं निगीर्णमनलो यथा ॥ २१ ॥

न केवलं साक्षात्फला भक्तिः किंतु शीघ्रफलापीति उत्तमां भक्तिं लक्षयन्नाह । द्वाभ्याम् । देवानामिति । एवं शुद्धं मनो यस्य पुंसस्तस्य देवानां इंद्रियाणां तद्देवानां च या या सत्वे विष्णावेव स्वाभाविकी वृत्तिः अन्यविषयेष्विवायत्नसिद्धा अनिमित्ता निष्कामा सा भागवती भक्तिरित्यन्वयः । कथं भूतानां देवानां आनुश्रविककर्मणां गुरोरुच्चारणमनुश्रूयत इत्यनुश्रवो वेदः तेनोक्तान्येव कर्माणि येषां गुणलिंगानां गुणा रूपादयः लिंगानि ज्ञापकानि येषां रूपाद्युपलब्धिकरणत्वेन तत्कल्पनात् । एतदुक्तं भवति विषयाभिमुखानामपीं द्रियाणां वेदोक्तविषयमात्रग्रहणात् । तदुक्तम् भगवदाराधनार्थक्रियाकरणद्वयस्य वृत्तिर्भागवतीति हेतुकथनं सत्वे विष्णौ सा वृत्तिरिति भक्तिलक्षणम् । सा च वाणी गुणानुकथने इत्यादि वक्ष्यमाणक्रमेण द्रष्टव्या सिद्धेः मोक्षादपि मोक्षस्य सुखरूपत्वात् भक्तौ तदनुभवाद्गरीयस्त्वम् । शर्करातज्ज्ञोजिनोरिव । जरयतीति कोशं लिंगशरीरं आत्मावरणमज्ञानं वा । निगीर्णं भुक्तमन्नादि यथा अनलो जठराग्निर्जरयति भुक्तपरिणामवत् भक्तस्यासाधारणयत्नैर्विनैव मोक्षो भवतीति भावः ॥ २०–२१ ॥

नैकात्मतां मे स्पृहयंति केचित् मत्पादसेवाभिरता मदीहाः ।
येऽन्योन्यतो भागवताः प्रसज्य सभाजयन्ते मम पौरुषाणि ॥२२॥

तस्माद्भक्तेर्गरीयस्त्वं श्रीकपिलवचनेन द्रढयति । पंचभिः नैकात्मतामिति । एकात्मतां सायुज्यं मोक्षं न स्पृहयंति भक्तिविरोधित्वात् यतः मत्पादसेवायामेव सर्वतो भावेन रताः । अनन्यमदीहाः मदर्था ईहा चेष्टा येषां ते । नहिं प्राधान्येन किं कुर्वन्ति इत्यपेक्षायामाह येन्योन्यत इति प्रसज्य प्रकर्षेण प्रसक्तिं कृत्वा सभाजयन्ते श्रवणकीर्तनादिना मानयन्तीति ॥ २२ ॥

पश्यंति ते मे रुचिरावतंसप्रसन्नवक्त्रारुणलोचनानि ।
रूपाणि दिव्यानि वरप्रदानि साकं वाचं स्पृहणीयां वदन्ति ॥२३॥

ननु त्वत्पौरुषत्वभाजनेन किं स्यात्तत्राह । पश्यंति ते म इति । प्रसन्नानि वक्त्राणि अरुणानि लोचनानि येषु तैः मद्रूपैः साकं सह एवं परमेश्वरसाक्षाद्दर्शनानंदो मुक्तौ नास्तीति तात्पर्यार्थः ॥ २३ ॥

तैर्दर्शनीयावयवैरुदारविलासहासेक्षितवामसूक्तैः ।
हृतात्मनो हृतप्राणांश्च भक्तिरनिच्छतो मे गतिमण्वीं प्रयुंक्ते ॥२४॥

मुक्तिसुखं त्वनायासेन भवतीत्याह । तैरिति । तैरूपैर्हेतुभिः हृतात्मनः हृतान्तःकरणान् हृतप्राणान् हृतबहिरिंद्रियान् अनिच्छतोपि भक्तान् मम भक्तिः अण्वीं सूक्ष्मां मोक्षलक्षणां गतिं दशां अपृथगायासलभ्यत्वाल्लघुतरां वा गतिं मुक्तिं भक्तिसुखात् अण्वीमिति वा भारं ग्रामं प्रापयतीनियत् प्रयुङ्क्ते प्रापयतीत्यर्थः । किं भूतैरूपैः उदारो विलासो लीला तथा हासो तथा ईक्षितं तैर्वामं मनोहरं सूक्तं येषु तैः ॥ २४ ॥

अथो विभूतिं मम मायिनस्तामैश्वर्यमष्टांगमनुप्रवृत्तम् ।
श्रियं भागवतीं वाऽस्पृहयंति भद्रां परस्य ते मेऽश्नुवतेनु लोके ॥२५॥

एवं विभूत्यादिकमपि भक्तावयत्नसाध्यमित्याह । अथो इति अविद्यानिवृत्त्यनंतरं तां विभूतिं सत्यलोकादिगतां भोगसंपत्तिं अणिमाद्यष्टांगैश्वर्यं च अनुप्रवृत्तं भक्तिमनु स्वत एव प्रवृत्तं भागवतीं वैकुंठस्थां श्रियं संपत्तिं अस्पृहयंति ते न स्पृहयंति। यद्यपि तथापि लोके वैकुंठाख्ये अश्नुवत एव प्राप्नुवन्त्येव ॥ २५ ॥

न कर्हिचिन्मत्पराः शान्तरूपे नङ्क्ष्यंति नोऽनिमिषो लेढि हेतिः ।
येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टम् ॥२६॥

नन्वेवं तर्हि लोकत्वाविशेषात् स्वर्गादिवद् भोक्तृयोग्यानां कदाचिद्विनाशः स्यात् इत्याशंक्याह । न कर्हिचिदिति । हे शान्तरूपे देवहूति मातः शान्तं शुद्धं यत्सत्वं तद्रूपे वैकुंठे या मत्पराः कदाचिदपि न नङ्क्ष्यन्ति भोगहीना न भविष्यंतीत्यर्थः । यतः तत्र कालोपि न

प्रभवतीत्याह। अनिमिषः निमेषशून्यः परत्रासे सर्वदा जाग्रद्रूपः मे मम हेतिः अस्त्रं कालचक्रमित्यर्थः । तान् नो लेढि न ग्रसति कुतः। येषामिति । सुत इव स्नेहविषयः सखेव विश्वासास्पदं गुरुरिव हितोपदेष्टा यतः सुहृदिव हितकारी इष्टं दैवं इष्टदेवतेव पूज्यः एवं प्रियः विषयवत्। आत्मा देहः तद्वत् ननु आत्मा सरूपं साधारण्यात् तदभिमानस्य त्वत्राविवक्षितत्वात् एवं सर्वभावेन ये मां भजंति तान् न कालचक्रं ग्रसतीत्यर्थः। अयं प्रकरणार्थः यः सकामो भक्तौ प्रवृत्तः पश्चात्स्वादं लब्ध्वा तान् विहाय भक्तिमेवेच्छति करोतिच। तस्य पूर्वकामान् कदाचिद्भगवान् पूरयत्येव। भक्तकामितार्थप्रदातृत्वनियमात् तदिदमुक्तमनिच्छतोपि यस्तु श्रुत्वा वा प्रसंगात् अनुभूय भक्तिस्वादं निष्काम एव भगवंतं भजते तस्य भक्तिसुखं सदा भवत्येवेति। अधिकंतु वैकुंठलोके ऐश्वर्य्यादिसुखमसाधारणमिति भक्तिः प्रसिद्धसिद्धेरप्यधिकेति दिक् ॥ २६ ॥

इमं लोकं तथैवामुमात्मानमुभयायिनम्।
आत्मानमनु ये चेह ये रायः पशवो गृहाः ॥ २७ ॥
विसृज्य सर्वानन्यांश्च मामेवं विश्वतोमुखम्।
भजंत्यनन्यया भक्त्या तान्मृत्योरतिपारये ॥ २८ ॥
नान्यत्र मद्भगवतः प्रधानपुरुषेश्वरात्।
आत्मनः सर्वभूतानां भयं तीव्रं निवर्तते ॥ २९ ॥

( ३ । २५ । ३९—४० कपिलः )

एवंभूतां भक्तिं एकांतभक्तेभ्यो ददामि नान्येभ्य इति तद्वाक्येनैवाह द्वाभ्याम्। इममित्याभ्याम् उभयायिनं लोकद्वयगामिनं आत्मानं सोपाधिकं आत्मानं अनु ये पुत्रकलत्रादयः ये पश्वादयः रायो धनानि। अन्यांश्च परिग्रहान् विसृज्य मां भजंति मृत्योः संसारात् अतिपारये अतिपारयामि तादृशभक्तिदानेन संसारपारं नयामीत्यतिपदस्यार्थः। अन्येभ्यस्तु निर्वाणादीन् ददामीति भावः। अतो न केवलभक्तमुमुक्षुभक्तयोरप्यविशेष इति स्वतः पुरुषार्थो भक्तिरिति द्रष्टव्यम् ॥ २८ ॥

अभक्तानां तु न कथंचिन्मोक्ष इत्याह । तद्वाक्येनैव द्वाभ्याम्। नान्यत्र मत इत्याभ्याम्। मत् मत्तो भगवतः अन्यत्र मां विना सर्वभूतानां आत्मनः भगवतः इत्यैश्वर्य्यं प्रधान पुरुषयोरीश्वरादिति निरपेक्षितत्वं आत्मन इति हितकारित्वं तीव्रं संसारलक्षणम् ॥ २९ ॥

तस्मात्त्वं सर्वभावेन भजस्व परमेष्ठिनम्।
तद्गुणाश्रयया भक्त्या भजनीयपदांबुजम् ॥ ३० ॥

( ३ । ३२ । २२ कपिलः )

परमेष्ठिनं मामेव तान् तान् गुणान् भक्तवात्सल्यादीनधिकृत्य प्रवृत्तया ॥ ३० ॥

तमेव वत्साश्रय भृत्यवत्सलं मुमुक्षुभिर्मृग्यपदाब्जपद्धतिम् ।
अनन्यभावे निजधर्म्मभाविते मनस्यवस्थाप्य भजस्व पूरुषम् ॥३१॥

एवं श्रीकपिलवाक्यमुपसंहृत्य नान्यत्रेत्यत्रैवार्थे ध्रुवं प्रति सुनीतिवाक्यमाह द्वाभ्याम् । तमेव वत्सेति । मृग्या अन्वेषणीया पदाब्जयोः पद्धतिः मार्गो यस्य । तमेवाश्रय शरणं भजस्वेत्यन्वयः । यथा लोकेपि भीतः शरणं प्रविश्य सेवां करोति । नान्यस्मिन्भावो यस्य तस्मिन् । निजधर्म्मभाविते शोधिते मनसि संस्थाप्य नित्यं स्मरन् भजस्व । नान्यथा हितसिद्धिरितिवाक्यार्थः ॥ ३१ ॥

नान्यं ततः पद्मपलाशलोचनाद् दुःखच्छिदं ते मृगयामि कंचन ।
यो मृग्यते हस्तगृहीतपद्मया श्रियेतरैरंग विमृग्यमानया ॥ ३२ ॥
(४।८।२२—२३ सुनीतिः)

तमेव इत्यनेन सूचितं सर्वोत्तमत्वं प्रपंचयति । नान्यमिति । हस्तेन तद्विरहतापशान्त्यर्थं तत्पूजार्थं वा गृहीतं पद्मं यया हे अंग ध्रुव इतरैर्ब्रह्मादिभिः ॥ ३२ ॥

अथो भजेत्वाखिलपूरुषोत्तमं गुणालयं पद्मकरेव लालसः ।
अप्यावयोरेकपतिस्पृधोः कलिर्न्न स्यात्कृतत्वच्चरणैकतानयोः ॥ ३३ ॥

ननु लक्ष्मीरपिकथं तमेव भजते सकलपौरुषशालित्वेन सर्वोत्तमत्वादिति पृथुवचनेनाह द्वाभ्याम् । अथो भजे त्वा इत्याभ्याम् । अथ स्वप्रकरणोक्तहेतोस्त्वामेव भज इति साधारणम् । एतद् दृष्टांतेन स्पष्टयति पद्मकरा लक्ष्मीरिव यथान्यवरत्यागेन लक्ष्मीः त्वां भजते तद्वत् । नन्वेवं तर्हि तया सह कलहः स्यात् । तत्राह । एकस्मिन्पत्यौ त्वयि स्पर्द्धमानयोरावयोः कर्म्मिणामिन्द्रादिनेव मे मया सह कलिर्न्न स्यात् तत्र हेतुः कृतस्त्वच्चरणयोरेकस्तानो मनोविस्तारो याभ्यां त्वच्चरणमहिम्नाकलिर्न्न स्यादिति भावः । यद्वा । अपि शब्दो वितर्कार्थः तया सह कलिर्कि न्न स्यादिति वितर्कयाति कालेहेतुः एकोति । ननु पर्य्यायेण सेवायां न स्यात् नेत्याह । कृतेति । अविशेषाद्युगपदिति विशेषः ॥ ३३ ॥

जगज्जनन्यां जगदीशवैशसं स्यादेव यत्कर्म्मणि नः समीहितम् ।
करोषि फल्ग्वप्युरुदीनवत्सलः स्वएवधिष्ण्येभिरतस्य किं तया ॥३४॥
(४।२०।२७—२८ पृथुः)

अथापि मे भयं नास्तीत्याह । जगज्जनन्यामिति । यत्कर्म्मणि यस्याः कर्माणि त्वत्सेवारूपे नः समीहितं नोऽस्माकं इच्छा भवति । अभयहेतुमाह । करोषि फल्गु तुच्छमपि उरु करोषि यतो दीनवत्सलः । निःस्पृहश्चेत्याह । स्वस्वरूप एव अभिरतस्य तव किं तया प्रयोजनं तां नाद्रियस इत्यर्थः । एवं प्रकृत्यैव भगवतो भक्तवात्सल्यं दर्शितं वस्तुतस्तु विष्णुभक्तान् मातेवानुगृह्णाति लक्ष्मीः तदुक्तं जगज्जनन्यामिति ॥ ३४ ॥

यः परं रहसः साक्षात्त्रिगुणाज्जीवसंज्ञितात् ।
भगवन्तं वासुदेवं प्रपन्नः स प्रियो हि मे ॥ ३५ ॥

( ४ । २४ । २८ रुद्रः )

अथ भागवता यूयं प्रियाःस्थ भगवान् यथा ।
न मे भागवतानां च प्रेयानन्योस्ति कर्हिचित् ॥ ३६ ॥

( ४ । २४ । ३० रुद्रः )

एवं विष्णुभक्तो रुद्रस्यापि प्रियो भवति इत्यत्र प्रचेतसः प्रति रुद्रवचनमाह द्वाभ्याम् । यः परमिति यः साक्षाद्वासुदेवं प्रपन्नः स हि स एव मे प्रियः प्रियकृदपराधेपि नाप्रिय इति वा । कथं भूतं रहसः सूक्ष्मात् त्रिगुणात् प्रधानात् जीवसंज्ञितात् पुरुषाच्च परं प्रकृतिपुरुषयोर्नियंतारमित्यर्थः ॥ ३५ ॥

अतएव यूयं मे प्रियाः । इत्याह । अथेति । भवद्भिरपि मयि प्रीतिः कार्य्येत्याशयेनाह । मत् मत्तोऽन्यः ॥ ३६ ॥

तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यया ।
हरिर्देहभृतामात्मा स्वयं प्रकृतिरीश्वरः ॥ ३७ ॥

( ४ । २९ । ४९ नारदः )

एवं रुद्रवाक्यमुदाहृत्य स वै पुंसां परो धर्म्म इत्यनेनोक्तं सर्वोपायानां भगवत्परत्वं युक्तमेवेत्याह । तत्कर्म्मेति हरेस्तोषो येन तस्मिन् हरौ मतिर्यया अत्र हेतुर्हरिरिति हरिर्देहभृतामात्मा ईश्वरश्च । तत्र हेतुः स्वयं स्वातन्त्र्येण प्रकृतिः कारणम् ॥ ३७ ॥

यस्यास्ति भक्तिर्भगवत्यकिंचना सर्वैर्गुणैस्तत्र समासते सुराः ।
हरावभक्तस्य कुतो महद्गुणा मनोरथेनासति धावतो बहिः ॥ ३८ ॥
हरिर्हि साक्षाद्भगवान् शरीरिणामात्माझषाणामिव तोयमीप्सितम् ।
हित्वा महांस्तं यदि सज्जते गृहे तदा महत्त्वं वयसा दंपतीनाम् ॥ ३९ ॥

( ५ । १८ । १२—१३ प्रह्लादः )

अतएव देवतांतरोपासनमपि भगवद्भक्तावंतर्भवतीत्यन्वयव्यतिरेकत्वेनाह । यस्यास्तीति । अकिंचना निष्कामा मनः शुद्धौ हरेर्भक्तिर्भवति ततश्च तत्प्रसादे सति सर्वे देवाः सर्वैर्गुणैर्धर्म्मज्ञानादिभिः सह तत्र सम्यगासते नित्यं वसन्ति । गृहाद्यासक्तस्य तु हरिभक्त्यसंभवात् कुतो महतां गुणाः ज्ञानवैराग्यादयो भवंति । असति विषयसुखे मनोरथेन बहिर्धावतः ॥ ३८ ॥

ननु* हरिविमुखस्य गृहाद्यासक्तस्यापि लोके महत्त्वं दृश्यते तत्राह हरिरिति। यथा झषाणां मीनानां ईप्सितम् तोयमेवात्मा तेन विना जीवनाभावात् महानिति निखिल गुणप्रसिद्धोपि हरिमीदृशं हित्वा यदि गृहे सज्जते तदा दंपतीनां मिथुनानां शूद्रादिष्वपि प्रसिद्धं वयसैव केवलं यन्महत्त्वं तदेव तस्य भवति नतु ज्ञानादिना। मिथुनेषु पूज्यमानेषु स्त्रीभ्यः पुंसां महत्त्वं बालमिथुनेभ्यश्च वृद्धमिथुनानां महत्त्वं यथेत्यर्थः। तन्महत्त्वमुपहासास्पदमिति भावः ॥ ३९ ॥

स वै पतिः स्यादकुतो भयः स्वयं समंततः पाति भयातुरं जनम्।
स एक एवेतरथा मिथो भयं नैवात्मलाभादधिमन्यते परम् ॥ ४० ॥
(५।१८।२० रमा)

तदेवं सर्वात्मना भगवानेव भजनीयो नत्वन्ये देवादयोपि स्वरक्षायामप्यक्षमत्वादित्याशयेनाह स वै पतिरिति। स वै एवं भूतः भगवानेक एव नान्यः यो भगवान् आत्मलाभात् परमन्यत् अधि अधिकं न मन्यते इतरथाऽन्याधीनमुखस्य न स्वतंत्रतास्वतंत्राणां नानात्वेन च मंडलेश्वराणामिव मिथो भयं स्यात् ॥ ४० ॥

सुरोऽसुरोवाप्यथ वानरोऽनरः सर्वात्मना यः सुकृतज्ञमीश्वरम्।
भजेत रामं मनुजाकृतिं हरिं य उत्तराननयत्कोशलान् दिवम् ॥४१॥
(५।१९।८ हनूमान्)

अतः श्रीभगवानेव सर्वैः सेव्य एव नतु सत्कुलजन्मादिकं तस्य तोषहेतुरित्यत्र हनूमद्वचनमुदाहरति द्वाभ्याम्। सुरोऽसुरो वेति। सुरो देवः असुरो दैत्यः नरो मनुष्यः अनरः मनुष्यादन्यः यः कोपि हरिं भजेत स एवोत्कर्षोत्तोपमाप्नोतीति विशेषः। मनुजाकृतिमिति उपासनाभिप्रायं सुकृतज्ञं अल्पीयस्यापि भजने बहुमानिनं उत्तरान् कोशलान् अयोध्यावासिनो दिव्यं वैकुंठं अनयत् ॥ ४१ ॥

न जन्म नूनं महतो न सौभगं न वाक् न बुद्धिर्नाकृतिस्तोषहेतुः ॥
तैर्यद्विसृष्टानपि नो वनौकसश्चकार सख्ये वत लक्ष्मणाग्रजः ॥४२॥
(५।१९।७ हनूमान्)

तत्रात्मानमेव दृष्टांतयति न जन्म नूनमिति महतः पुरुषाज्जन्म महतो रामस्य वा सौभगं सौंदर्यं आकृतिर्जातिर्यत् यस्मात् तैः जन्मादिभिः विसृष्टानपि नो वनौकसः वनचरान् वत अहो लक्ष्मणस्याग्रजोपि सखित्वे कृतवान् अनुगृहीतवानित्यर्थः ॥ ४२ ॥

सत्यं दिशत्यर्थितमर्थितो नृणां नैवार्थदो यत्पुनरर्थिता यतः।
स्वयं विधत्ते भजतामनिच्छतामिच्छापिधानं निजपादपल्लवम् ॥४३॥
(५।१९।२७ देवाः)

---

* भक्तिरहितस्य गृहाद्यासक्तस्य इति पाठान्तरम्।

तेष्वपि निष्कामाः कृतार्था इत्याह । सत्यमिति । अर्थितः प्रार्थितः सन् अर्थितं ददातीति सत्यं तथापि परमार्थदो न भवति यत् यस्मात् यतो दत्तानंतरं पुनरप्यर्थिता भवति ननु नार्थितश्चेन्न किमपि दद्यात् इत्याशंक्याह । अनिच्छतां निष्कामानां इच्छापिधानं आच्छादकं सर्वकामपूरकं निजपादपल्लवं स्वयमेव संपादयति यद्वा कामेनापि भजतां कृपया परमया परमहितमेव विधत्त इत्याह । सत्यम् दिशतीति अर्थितः सन् अर्थितं दिशतीति सत्यम् । पुनः पुनरर्थिता नैव ददातीति कुतः यतः अर्थदः । विषयाश्चानर्थाः । तर्हि किं ददातीत्यपेक्षायामाह । निजपादपल्लवं इच्छापिधानं तेषामनिच्छतामपि धिधत्ते । यतः कोपि कामो नोदेति । अनर्थप्रार्थनेपि परमार्थद एव प्रकृतिः । यथा माता बालानां मुखात् मृदमपनीय रुदतामप्यनिच्छतां शर्करां ददाति ज्ञातरसो बालः मृदं विहाय शर्करायामनुरज्यते । तदुक्तं कारुणिकत्वात् स्वयमिति ॥ ४३ ॥

तत्साधु मन्येऽसुरवर्य्य देहिनां सदा समुद्विग्नधियामसद्ग्रहात् ।
हित्वात्मपातं गृहमंधकूपं वनं गतो यद्धरिमाश्रयेत ॥ ४४ ॥

( ७ । ५ । ५ प्रह्लादः )

ननु महान्तोपि कामभोगार्थं* भजन्ते सत्यं न ते महांतः किंतु विषयभोगत्यागेनैतत्साधुकारित्वमित्यत्र प्रह्लादवचनमुदाहरति तत्साधुमन्ये इति । हे असुरवर्य्य असद्ग्रहात् अहं ममेति मिथ्याभिनिवेशात् हेतोः सम्यक् उद्विग्ना धीर्येषाम् । वनं गतः सन् हरिमाश्रयेतेति यत् तदेव साधु मन्ये । कथं भूतं गृहं हित्वा आत्मनः पातं अधःपाते निमित्तं कुतः अंधकूपवत् मोहावहं वनं गतो गृहादावनासक्तः सन् हरिमाश्रयेत भजेतेति यत्साधु मन्ये यो हरिमाश्रयेत्स एव वनंगतः अनासंग एव गृहपरित्यागः ननु सर्वोपायत्वेन वनगमनं सुदुर्दर्श्यं वस्तुतस्तु वनगमनं संगपरित्यागो बोद्धव्यः तस्मात्साधूक्तं स वै पुंसामिति ॥ ४४ ॥

षष्ठे यमवाक्यम् ।

एतावानेव लोकेऽस्मिन्पुंसां धर्म्मः परः स्मृतः ।
भक्तियोगो भगवति तन्नामग्रहणादिभिः ॥ ४५ ॥

( ६ । ३ । २२ यमः )

यतो भक्तिद्वारा तेषां परत्व उत्कृष्टत्वम् । भक्तेस्तु स्वत एव परत्वमुत्कृष्टत्वम् इत्याह परत्व भक्तेषु स्वतएव परत्वमित्याह । एतावानिति । परः उत्कृष्टः अक्षयफलत्वात् । एतावानेव यो भक्तियोगः ॥ ४५ ॥

अविस्मितं तं परिपूर्णकामं स्वेनैव लाभेन समं प्रशान्तम् ।
विनोपसर्पत्यपरं हि बालिशः श्वलांगुलेनातितितर्ति सिंधुम् ॥ ४६ ॥

( ६ । ९ । २२ देवा. )

---

* पतन्ते इति पाठान्तरम् ।

अतएव ये भगवत आश्रयं परित्यज्य आश्रयान्तरेण संसारं ततुमिच्छंति ते न तरंतीत्याह अविस्मितमिति। अविस्मितं तं निरहंकारं कुतः शांतं रागादिशून्यं तच्च कुतः स्वेनैव लाभेन परिपूर्णकामं तच्च कुतः उपाधिपरिच्छेदशून्यं श्वलांगूलेन समुद्रमतितर्तुमिच्छति यथा तेन समुद्रतरणं न भवति तथा निरीश्वराश्रयेण व्यसनार्णवतरणं न भवतीति ॥ ४६ ॥

नारायणपराः सर्वे न कुतश्चन बिभ्यति।
स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः ॥ ४७ ॥

( ६। १७। २८ रुद्रः )

नन्वेवं देवपित्रादिभ्योऽभजने भयं स्यान्नेत्याह। नारायणपरा इति। सर्वे स्त्रीशूद्रादयोऽपि कुतश्चन कस्मादपि न बिभ्यति न काप्यनुरज्यंतेवेति भावः यतः स्वर्गादौ एवं तुल्योऽर्थः प्रयोजनमिति दृष्टं शीलं येषां ते तथा ॥ ४७ ॥

वासुदेवे भगवति भक्तिमुद्वहतां नृणाम्।
ज्ञानवैराग्यवीर्य्याणां नेह कश्चिद् व्यपाश्रयः ॥ ४८ ॥

( ६। १७। ३१ रुद्रः )

अतो भागवतानां निस्पृहत्वं उचितमेवेत्याह। वासुदेवेति ज्ञानवैराग्ययोर्वीर्य्यं बलं येषां तेषां विशिष्टबुद्धया आश्रयणीयोऽर्थो नास्ति ॥ ४८ ॥

मतिर्न कृष्णे परतः स्वतो वा मिथोऽभिपद्येत गृहव्रतानाम्।
अदान्तगोभिर्विशतां तमिस्रं पुनः पुनश्चर्वितचर्व्वणानाम् ॥४६॥
न ते विदुः स्वार्थगतिं हि विष्णुं दुराशया ये बहिरर्थमानिनः।
अंधा यथांधैरुपनीयमाना वाचीशतन्त्र्यामुरुदाम्नि बद्धाः ॥५०॥

( ७। ५। ३०-३१ प्रह्लादः )

तर्हि सर्वैर्भगवानेव किमिति न सेव्यते तत्राह मतिर्न कृष्णेति। परतः स्वतो वा अन्योन्यतो वा नाभिपद्येत न संपद्येत। केषां गृह एव व्रतं संकल्प इति कृत्यचिंता येषां अतएवादान्तैरनुपरतैर्गोभिरिन्द्रियैर्हेतुभूतैः तमिस्रं संसारं विशतां तत्र चर्वितस्यैवचर्वणं येषां तस्माद्विषयसंगदोषात् सर्वे तं भजंत इति भावः ॥ ४९ ॥

ननु श्रीकृष्णस्य परमानंदरूपत्वात् तेपि तन्निष्ठा एव किन्न भवंति तदज्ञानादित्याह। न ते विदुरिति ये दुराशयाः। विषयवासितान्तःकरणाः तेहि विदुः तत्र हेतुः स्वस्मिन्नेवार्थः पुरुषार्थो येषां तेषां गतिं गम्यं। ननु तेपि गुरूपदेशाद्विष्णुं ज्ञास्यन्ति तत्राह। बहिर्विषयेष्वर्थो येषां ते बहिरर्थास्तानेव गुरुत्वेन मंतुशीलं येषां ते नित्यं विषयासक्तचरितश्रद्धालव इत्यर्थः। अतो अंधैरुपनीयमाना अन्धा यथा पंथानं न विदुः किंतु गर्ते पतन्ति तथा तेपि ईशस्य तन्त्र्यां दीर्घरज्ज्वां वेदलक्षणायां उरूणि दामानि ब्राह्मणादिनामानि यस्यां तस्यां काम्यैः

कर्मभिर्बद्धा एव भवन्तीत्यर्थः। तदुक्तं विषयाविष्टचित्तानां विष्ण्वावेशः सुदूरतः वारुणी दिग्गतं वस्तु व्रजन्नैन्द्रीं किमाप्नुयात्। तस्मात् यावद्विषयवासना नाक्रमति तावदारभ्य सर्वास्ववस्थासु भगवानेव भजनीय इति समुदायार्थः ॥ ५० ॥

कौमार आचरेत्प्राज्ञो धर्म्मान् भागवतानिह ।
दुर्लभं मानुषं जन्म तदप्यध्रुवमर्थदम् ॥ ५१ ॥

(७।६।१ प्रह्लादः)

तदेवाह कौमार इति। इहैव मानुषजन्मनि धर्म्मान् आचरेत्। यत अर्थदमेतत्। तत्र च कौमार एव यतस्तदप्यध्रुवम्। न चैवं भूतं जन्मान्तरं यतस्तद्दुर्लभम्। तत्र धर्मानेवाचरेत् न सुखार्थे प्रयासान्। तत्रापि भागवतानेव न काम्यान्। कौमार एव कौमारमारभ्येत्यर्थः ॥ ५१ ॥

न ह्यच्युतं प्रीणयतो बह्वायासोऽसुरात्मजाः ।
आत्मत्वात्सर्वभूतानां सिद्धत्वादिह सर्वतः ॥ ५२ ॥

(७।६।१९ प्रह्लादः)

नच बालवृद्धानां तद्भजनमशक्यमित्यत्र प्रह्लादवचनमाह। नह्यच्युतमिति हे असुरात्मजाः। न ह्यात्मभजने प्रयासो भवति न च दुर्लभ इत्याह। सिद्धेति ॥ ५२ ॥

कोतिप्रयासो सुरबालका हरेरुपासने स्वे हृदि छिद्रवत्सतः ।
स्वस्यात्मनः सख्युरशेषदेहिनां सामान्यतः किं विषयोपपादनैः ॥५३॥
रायः कलत्रं पशवः सुतादयो गृहा महीकुंजरकोशभूमयः ॥
सर्वेर्थकामाः क्षणभंगुरायुषः कुर्वन्ति मर्त्यस्य कियत् प्रियं बलाः॥५४॥
एवं हि लोकाः क्रतुभिः कृता अमी क्षयिष्णवः सातिशया न निर्म्मलाः ।
तस्माददृष्टश्रुतदूषणं परं भक्त्यैकयेशं भजतात्मलब्धये ॥ ५५ ॥

(७।७।३८-४०)

तथा हेत्वंतरमप्याह। कोतीति। छिद्रवत् आकाशवत् सर्वदा वर्तमानस्य विषयाणामुपपादनैः अर्ज्जनैः किं नश्च हेतुः सर्वदेहिनां सामान्यतः साम्यम् ॥ ५३ ॥

तस्माद्विषयाणां शूकरादिसाधारणत्वात् तन्निष्ठत्वे तैरपि विशेषापत्तेः निष्फलं च विषयार्जनमित्याह। राय इति। रायः अर्थाः। क्षणं भंगुरमायुर्यस्य येषामर्थादीनां वा अतएव बालाः तदुक्तमितिहासे। धनं हि पुरुषो लोके पुष्यं धनमेव च। अवश्यमेकं त्यजति तस्मात्किं धनतृष्णया ॥ ५४ ॥

एवंहि। अक्षय्यं हि चातुर्मास्ययाजिनः सुकृतं भवतीत्यादिना श्रुताः स्वर्गादयोपि न सेवार्हा इत्याह। एवंहीति। अमी लोकाः स्वर्गादयः क्षयिष्णुत्वे हेतुः क्रतुभिः कृता इति। तद्यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयत इति श्रुतेश्च अतएव पुण्यतारतम्येन सातिशयाः न्यूनाधिकभावापन्नाः तस्मात् न च निर्म्मलाः स्पर्द्धादिमत्वात् न विद्यते दृष्टं श्रुते च दूषणं यस्मिन् तमीशं भक्त्या उक्तया नवविधया भजत आश्रयत ॥ ५५ ॥

तस्मादर्थाश्च कामाश्च धर्माश्च यदपाश्रयाः ।
भजतानीहयात्मानमनीहं हरिमीश्वरम् ॥ ५६ ॥

(७।७।४८ प्रह्लादः)

तस्माद्भक्त्यर्थमेव भजेत न च धर्म्माद्यर्थमपि पृथक् यतेतेत्याह। तस्मादिति। यदपाश्रयाः यदधीनाः अनीहया भोगानिच्छया ॥ ५६ ॥

नालं द्विजत्वं देवत्वमृषित्वं वासुरात्मजाः
प्रीणनाय मुकुन्दस्य न वित्तं न बहुज्ञता ॥ ५७ ॥

७।७।५१ प्रह्लादः)

न च धर्माद्यर्थमपि पृथक् यतेतेत्याह। यदपाश्रया यदधीनाः अनीहया भोगानिच्छया ॥ ५७ ॥

न दानं न तपो नेज्या न शौचं न व्रतानि च ।
प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनम् ॥ ५८ ॥

७।७।५२ प्रह्लादः)

नन्वेवं दैत्यानामस्माकं कथं ब्राह्मणादिकृत्ये भगवद्भजने अधिकार इति चेत् न। भगवद्भक्तावधिकारिनियमाभावात् इत्याह। नालमित्याभ्याम्। अमलया निष्कामया विडंबनं नटनमात्रम् ॥ ५८ ॥

मन्ये धनाभिजनरूपतपःश्रुतौजस्तेजःप्रभावबलपौरुषबुद्धियोगाः ।
नाराधनाय हि भवन्ति परस्य पुंसो भक्त्या तुतोष भगवान् गजयूथपाय ॥ ५९ ॥

७।९।९ प्रह्लादः)

इममेवार्थं सदृष्टान्तमाह मन्य इति। अभिजनः सत्कुले जन्मरूपं सौंदर्यं श्रुतं पांडित्यम्। ओजः इन्द्रियनैपुण्यं तेजः कांतिः। प्रभावः प्रतापबलं शारीरं पौरुषमुद्यमः। बुद्धिः प्रज्ञा योगोऽष्टांगः। एते धनादयो द्वादशापि गुणाः परस्य पुंसः श्रीकृष्णस्य आराधनाय न भवन्ति हि यतः केवलया भक्त्यैव गजेन्द्राय उक्तधर्महीनायापि भगवांस्तुष्टोऽभवत् तस्मात्साधूक्तं कौमार इत्यादि ॥ ५९ ॥

चित्रं तवेहितमहोमित योगमाया लीलाविसृष्टभुवनस्य विशारदस्य ।
सर्वात्मनः समदृशो विषमस्वभावो भक्तप्रियो यदसि कल्पतरुस्वभावः ॥ ६०॥

८ । २७ । ८ प्रह्लादः )

नन्वभिजनाभिमतो योग्यान् तो विहाय तद्रहितभक्तमात्रे गजेंद्रे तोपः कथमिति चेत् भक्तिमात्रग्राह्यस्वभावत्वात् भगवनइत्यत्र वामनं प्रति प्रह्लादवचनमाह । चित्रमिति तवेहितं अहोचित्रं किं तत् सर्वात्मनः समदृशः विषमस्वभाव इति यत् सर्वात्मनत्वे विचित्रचरितत्वे हेतुः अमिता अचिंत्या योगमाया तस्या लीला तथा विसृष्टानि भुवनानि येन तस्य अहो इत्यत्र संधिरार्षः समदृक्त्वे हेतुः विशारदस्य सर्वज्ञस्य अथवा भक्तिप्रियत्वेपि तव वैषम्यं नास्त्येव यतः कल्पतरुस्वभावः सन्भक्तिप्रियोसि नहि कल्पतरुराश्रितानामेव कामान् पूरयन् विषमो भवतीत्यर्थः तस्माद्भक्तौ सर्वेधिकारिणः तत्प्रसादेन भक्तिरेव कारणं नत्वभिजनादि इति सिद्धम् ॥ ६० ॥

स्वमातुः स्विन्नगात्राया विश्रस्तकवरस्रजः ।
दृष्ट्वा परिश्रमं कृष्णः कृपयासीत्स्वबन्धने ॥ ६१ ॥
एवं संदर्शिता ह्यंग हरिणा भक्तवश्यता । नृपेन्द्र
स्ववशेनापि कृष्णेन यस्येदं सेश्वरं वशे ॥ ६२ ॥

( १० । ९ । २८—१९ शुकः )

केवलं भक्तिप्रियो भगवान् भक्तवश्योपीति । शुकवाक्येनाह चतुर्भिः । स्वमातुरित्यादिभिः । स्वमातुर्यशोदायारज्जुंनसंधानेन स्विन्नगात्राया अतएव विस्रस्ताः कवरेभ्यः स्रजो यस्याः कवरस्रजो विस्रस्ता वा मदर्थो विश्राम्यतीति कृपया स्वबन्धनार्थमासीत् उलूखले बन्धनं कारयामासेत्यर्थः ॥ ६१ ॥

अंगेति राजसंबोधनं स्ववशेन स्वतन्त्रेण इदं जगत्संसारः ॥ ६२ ॥

नेमं विरिंच्यो न भवो न श्रीरप्यंगसंश्रया ।
प्रसादं लेभिरे गोपी यत्तत्प्राप विमुक्तिदात् ॥ ६३ ॥
नायं सुखापो भगवान् देहिनां गोपिकासुतः ।
ज्ञानिनाञ्चात्मभूतानां यथा भक्तिमतामिह ॥ ६४ ॥

( १० । ९ । २०–२१ शुकः )

भगवत्प्रसादमन्येपि लभंत इदं त्वतिचित्रमित्याह नेममिति । विरिंच्यः पुत्रोपि भवः स्वात्मापि श्रीर्जायापि । यतं न लेभिरे गोपी यशोदा यत्प्रसादरूपं तत्पूर्वोक्तं बन्धनं ततः कृष्णाद्धा ॥ ६३ ॥

ननु कथमेवं भक्तवश्यत्वादेवेत्याह ॥ नायमिति देहिनां देहाभिमानिनां तापसादीनां ज्ञानिनां निवृत्ताभिमानानामपि सुखापः ज्ञानेनैव तेषां उद्धारः स्यात् भक्तिं विना ज्ञानमपि न सिद्ध्येदित्याह ब्रह्मवाक्येन ॥ ६४ ॥

श्रेयःसृतिं भक्तिमुदस्य ते विभो क्लिश्यंति ये केवलबोधसिद्धये ।

तेषामसौ क्लेशलव एव शिष्यते नान्यद्यथास्थूलतुषावघातिनाम् ॥ ६५ ॥

पुरेह भूमन् बहवोपि योगिनस्तदर्पितेहा निजकर्म्मलब्धया ।

विबुध्य भक्त्यैव कथोपनीतया प्रपेदिरेऽञ्जोऽच्युत ते गतिं पराम् ॥ ६६ ॥

( १० । १४ । ४–५ ब्रह्मा )

श्रेयः स्रुतिमिति । श्रेयसां अभ्युदयापवर्गलक्षणानां स्रुतिः सरणं प्रभावो यस्याः सरस इव निर्झराणां तां ते तव भक्तिं उदस्य त्यक्त्वा श्रेयसां मार्गभूतामिति वा तेषां क्लेशल क्लेश एवावशिष्यते नान्यत् यथा स्थूलतुषावघातिनाम् । अयं भावः यथा अल्पप्रमाणं धान्यं परित्यज्य अंतःकणाहीनान् स्थूलधान्याभासान् तुषान् ये बध्नन्ति तेषां न किंचित्फलम् एवं भक्तिं तुच्छीकृत्य ये केवलं बोधाय यतंते तेषामपीति ॥ ६५ ॥

अत्र सदाचारं प्रमाणयति पुरेति । इह लोके ये पूर्वं योगिनोपि संतः योगैः ज्ञानमप्राप्य पश्चात्त्वदर्पितेहाः त्वयि अर्पिता इहालौकिक्यपि चेष्टा यैस्तं निजकर्मलब्धया त्वदर्पितेति जैः कर्म्मभिर्लब्धया त्वय्यर्पिता ईहा च निजानि कर्माणि च तैः लब्धयेत्यंतमेकं पदं वा कथोपनीतया कथया त्वत्समीपं प्रापितया त्वत्कथाश्रवणप्रसादादुत्पन्नया भक्त्यैव विबुध्य आत्मानं ज्ञात्वा अञ्जः सुखेनैव ते परां गतिं प्राप्ताः ॥ ६६ ॥

तस्मिन् भवन्तावखिलात्महेतौ नारायणे कारणमर्त्यमूर्तौ ।

भावं विधत्तो नितरां महात्मन् किंवावशिष्टं युवयोस्तु कृत्यम् ॥ ६७ ॥

( १० । ४६ । ३३ उद्धवः )

एवं भक्तस्य न किंचित् कृत्यमवशिष्यते इत्यत्र नंदं प्रति उद्धववाक्यमुदाहरति तस्मिन्निति । अखिलानामात्मा हेतुश्च हे महात्मन् नंद युवयोः यशोदायास्तव च ॥ ६७ ॥

दानव्रततपोहोमजपस्वाध्यायसंयमैः ।

श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते ॥ ६८ ॥

( १० । ४७ । २४ उद्धवः )

अत्र हेतुमाह दान इति भक्तौ सिद्धायां किं तत्कारणानुष्ठानेन तस्मात्साधूक्तं स वै पुंसामिति भावः ॥ ६८ ॥

क्वेमाः स्त्रियोवनचरीर्व्यभिचारदुष्टाः कृष्णे क्व चैष परमात्मनि रूढभावः ।

नन्वीश्वरोनुभजतो विदुषोपि साक्षाच्छ्रेयस्तनोत्यगदराज इवोपयुक्तः ॥ ६९ ॥

( १० । ४७ । ५९ उद्धवः )

एवं जातिव्यापारनैरपेक्ष्येण भगवदनुग्रहे अविद्वदविहितापि भक्तिरेवकारणं-माह उद्धववाक्येन क्वेमा इति । वनचर्य्यो गोप्यः कृष्णेऽधिकरणे एष गोपीविषयः कृष्णस्य तासु स्नेह इत्यर्थः । यद्वा कृष्णे तासां स्नेह इत्यर्थः । ननु कथमेवम् । तत्राह साक्षाद्भजतः पुंसः नु अहो उपयुक्तः सेवितः अगदराजः अमृतं यथेति ॥ ६९ ॥

नायं श्रियोंग उ नितान्तरतेः प्रसादः स्वर्योषितां नलिनगन्धरुचां कुतोन्याः ।
रासोत्सवेऽस्य भुजदंडगृहीतकंठलब्धाशिषां य उदगाद्व्रजवल्लवीनाम् ॥ ७० ॥

( १० । ४७ । ६० उद्धवः )

ईश्वरो भक्तान् भजत इत्युक्तं तदेवाह नायमिति । अंगे वक्षसि नितान्तरतेः श्रियोपि नायं प्रसादोनुग्रहोस्ति नलिनस्येव गंधः रुक्कांतिश्च यासां तासां स्वर्योषितामपि नास्ति अन्याः पुनस्तादृशप्रसादयोग्याः कुतः अस्य कृष्णस्य भुजदण्डाभ्यां गृहीतः आलिंगितः कंठस्तेन लब्धा आशिषो याभिः तासां गोपीनां य उदगात् आविर्बभूव तस्मा इति प्रेमै-कलभ्यो भगवानित्यर्थः ॥ ७० ॥

आसामहोचरणरेणुजुषामहं स्यां वृंदावने किमपि गुल्मलतौषधीनाम् ।
या दुस्त्यजं स्वजनमार्य्यपथं च हित्वा भेजुर्मुकुंदपदवीं श्रुतिभिर्विमृग्याम् ॥ ७१ ॥

( १० । ४७ । ५९ । ६१ उद्धवः )

किंच भगवत्प्राप्त्युपाये दोषोपि गुण एवेति दर्शयन्नेव आस्तां तावद् गोपीनां भाग्यं ममापि तावत्प्राप्यमित्याह । आसामिति । आसां गोपीनां यश्चरणरेणुस्तं भजतां गुल्मादीनां मध्ये अहं किमपि स्याम् । इत्याशास्ते आसां कासामित्याह । आर्य्याणां मार्गं धर्ममपि हित्वा ॥ ७१ ॥

न ब्रह्मणः स्वपरभेदमतिस्तव स्यात्सर्वात्मनः समदृशः स्वसुखानुभूतेः ।
संसेवतां सुरतरोरिव ते प्रसादः सेवानुरूपमुदयो न विपर्य्ययोत्र ॥ ७२ ॥

( १० । ७२ । ६ युधिष्ठिरः )

अत्र भक्तिमात्रग्राह्यत्वे विपर्य्ययशंका निरसितुं युधिष्ठिरवाक्यमाह न ब्रह्मण इति । स्वः पर इति भेदबुद्धिः अयमनुग्राह्योयं नानुग्राह्य इति तव नास्ति कुतः ब्रह्मणः निरु पाधेः । किंच सर्वात्मनः अतएव समदृशः किंच स्वसुखानुभूतेः अतएव रागाद्यभावा दितिभाव परंतु भजनान्ते प्रसादो नान्येषाम् । तत्रापि सेवानुरूपमुदयः फलं नत्वत्र भक्तेषु सेवानुरूपे प्रसादः । विपर्य्ययोऽन्यथाभावः । यथा कल्पद्रुमस्य रागादिराहित्ये सेवकेष्वेव फलजनकत्व नान्येषु ॥ ७२ ॥

मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते ।
दिष्ट्या यदासीन्मत्स्नेहो भवतीनां मदापनः ॥ ७३ ॥

( १० । ८२ । ४४ श्रीकृष्णः )

किंच भक्तिमात्रग्राह्यत्वे. भगवद्वचनमेव प्रमाणमिति बुद्ध्या भगवद्वचनमाह मयीति । मयि भक्तिर्हि भक्तिमात्रमेव तावदमृतत्वाय कल्पते । यत्तु भवतीनां मयि स्नेह आसीत् दिष्ट्या अतिभद्रं कुतः मदापनः मत्प्रमाण इति ॥ ७३ ॥

ये वै भगवता प्रोक्ता उपाया ह्यात्मलब्धये । = धर्मान्

अञ्जः पुंसामविदुषां विद्धि भागवतान्हि तान् ॥ ७४ ॥

यानास्थाय नरो राजन्न प्रमाद्येत कर्हिचित् ।

धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह ॥ ७५ ॥

कायेन वाचा मनसेंद्रियैर्वा बुद्ध्यात्मना वानुसृता स्वभावात् ।

करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत्तत् ॥ ७६ ॥

( ११ । २ । ३४-३६ कविः )

ननु ज्ञानशास्त्रं विना न ज्ञानं नच तेन विना अमृतत्त्वम् । सत्यं । ज्ञानस्य भक्त्युत्पत्तिकरत्वात् इत्यत्र चतुर्भिः कविवचनमाह ये वै भगवतेति । मन्वादिमुखेन वर्णाश्रमादि-धर्मानुक्त्वा अतिरहस्यतया स्वमुखेनैव भगवता शास्त्रं अविदुषामपि पुंसां अञ्जः सुखेनैव आत्मलब्धये ये वै उपायाः प्रोक्तास्तान् भागवतान् धर्मान् विद्धि ॥ ७४ ॥

अञ्जस्त्वं विवृणोति । यानास्थायेति । यानास्थाय आश्रित्य योगादिष्विव न माद्येत विघ्नैर्न विहन्येत किंच निमील्य नेत्रे धावन्नपि इह एषु भागवतधर्मेषु न स्खलेत् । निमीलनं नामाज्ञानं । यथाहुः श्रुतिस्मृती उभे नेत्रे विप्राणां परिकीर्तिते एकेन विकलः काणो द्वाभ्या-मंधः प्रकीर्तित इति । अज्ञात्वापीत्यर्थः । तथा पादन्यासस्थानमतिक्रम्य परतः पादन्यासेन गतिर्धावनम् । तद्वत् अत्रापि किंचित् अतिक्रम्य शीघ्रमाचरणं धावनं तथा चरन्नपि न स्खलेत् न प्रत्यवायी स्यात् तथा न पतेत् तत्फलात् न भ्रश्येत् ॥ ७५ ॥

ननु के ते भागवता धर्मा ईश्वरार्पितानि सर्वाणि कर्माणीत्याहुः । कायेनेति । आत्मना चित्तेन अहंकारेण वा । अनुसृतो यः स्वभावः । तस्मात् । अयमर्थः । न केवलं विधितः एव कृतमिति नियमः स्वभावानुसारि लौकिकमपि कृतं । तथा चोक्तं भगवद्गीतासु । यत्करोषीत्यनेन । यद्वा कायादीनामेव नात्मन इत्याशंक्याह । अध्यासेनानुसृतात् ब्राह्मणत्वादिस्वभावात् यत्करोषीत्यर्थः । तत्सर्वं परस्मै परमेश्वराय नारायणायेति समर्पयेत् तथा सति सकलमपि भागवतो धर्मो भवतीत्यर्थः ॥ ७६ ॥

इष्टं दत्तं तपो जप्त्वं वृत्तं यच्चात्मनः प्रियम् ।

दारान् गृहान्सुतान् प्राणान्यत्परस्मै निवेदनम् ॥ ७७ ॥

( ११ । ३ । २८ प्रबुद्धः )

एतदेव प्रपंचयति । इष्टमिति इष्टं यागः दत्तमित्यादि भावे निष्ठा वृत्तं सदाचारः । आत्मनः प्रियं गन्धपुष्पादिदारादीनप्यालक्ष्य परस्मै परमेश्वराय निवेदनं तत्सेवकतया

समर्पणं यत् तच्छिन्देदिति शेषः । तस्मादेवं भूतया भक्त्या ज्ञानं स्यादेवेति न किंचिदनुपपन्नमिति भावः ॥ ७७ ॥

भयं द्वितीयाभिनिवेशतः स्यादीशादपेतस्य विपर्ययोऽस्मृतिः ।

तन्माययातो बुध आ भजेत्तं भक्त्यैकयेशं गुरुदेवतात्मा ॥ ७८ ॥

( ११ । २ । ३७ कविः )

अत्र युक्तिमाह । भयमिति । यतो भयं संसाररूपं तन्मायातो न भवेत् अतो बुद्धो बुद्धिमान् तमेव भजेत ननु भयं देहाभिनिवेशतो भवति स च देहाहंकारतः स च स्वरूपास्मरणात् किमङ्ग तस्य माया करोति अत आह । ईशादपेतस्येति ईशविमुखस्य तन्मायया अस्मृतिः भगवतः स्वरूपा स्फूर्तिः ततो विपर्ययो देहोऽस्मीति ततो द्वितीयाभिनिवेशाद् भयं भवति एवंहि प्रसिद्धं लौकिकीष्वपि मायासु । तदुक्तं भगवता । दैवी ह्येषेति दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते । इत्येकया भक्त्या अव्यभिचारिण्या भजेत किंच गुरु देवतात्मा ईश्वरश्च आत्मा प्रेष्ठश्च यस्य यथा दृष्टिः सन्नित्यर्थः । तस्मात्साधूक्तं ये वै भगवतेति भावः ॥ ७८ ॥

त्वां सेवतां सुरकृतावहवोन्तरायाःस्वौकोविलंघ्यपरमं व्रजतां पदन्ते ।

नान्यस्य बर्हिषि बलीन् ददतः स्वभागान् धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि ॥७९॥

( ११ । ४ । १० कामादयः )

यदुक्तं न प्रमाद्येत तदुपलक्षणं भक्तास्तु विघ्नहेतूनेवाभिभवतीत्यत्र कामादिवचनमुदाहरति त्वामिति । त्वां सेवतां सेवमानानां सुरैरिन्द्रादिभिः कृता बहवोन्तराया विघ्ना भवन्ति कुतः स्वौकः स्थानं स्वर्गमतिक्रम्य परमं तव स्थानमनुव्रजतां नान्यस्य त्वामसेवमानस्य यज्ञादिपरस्यविघ्ना न भवन्तीत्यर्थः कुतः बर्हिषि यज्ञे स्वभागान् करान् कृषिकरा इव राज्ञे इन्द्रादिभ्यः ददतः प्रयच्छतः तर्हि तत्किं मद्भक्तो विघ्नैर्भ्रंश्येत न यदि त्वं अविता तदा विघ्नमूर्ध्नि पदं धत्ते यदीति निश्चये यतस्त्वं सर्वस्याधीश्वरः अविता रक्षकः अतोऽसौ विघ्नानां मूर्ध्नि पदमङ्घ्रिं धत्ते मोक्षार्थं अन्यो मार्गः विघ्नदूषित एव भक्तिस्तु अप्रतिहता ॥ ७९ ॥

मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह ।

चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक् ॥ ८० ॥

य एवं पुरुषं साक्षादात्मप्रभवमीश्वरम् ।

न भजंत्यवजानंति स्थानभ्रष्टा पतन्त्यधः ॥ ८१ ॥

( ११ । ५ । २-३ चमसः )

एवं भक्तानां अभितः प्राप्तिमुक्त्वा अभक्तानामधोगातिमाह द्वाभ्याम् । मुखेत्यनेन गुणैः सत्वेन विप्रः सत्वरजोभ्यां क्षत्रियः रजस्तमोभ्यां वैश्यः तमसा शूद्र इति। एषां मध्ये अज्ञात्वा न भजन्ति ये ये च ज्ञात्वाप्यवजानन्ति ते अधः पतन्ति अत्राज्ञानात् संसारनिवृत्तिर्नास्तीत्येव अधःपातः अवजानतान्तु महानरकपात इति । आत्मनः प्रभवो जन्म यस्मादभक्ता गुरुद्रोहिण इतिभावः । ईश्वरं पोषकं स्वामिनं तदभक्ताः कृतघ्ना इति भावः स्थानाद्वर्णाश्रमाद् भ्रष्टाः स्वधर्मस्था अपि अभक्ता एवेति भावः ॥८०–८१॥

घोरे कलियुगे प्राप्ते सर्वधर्म्मविवर्जिते ।
वासुदेवपरा मर्त्यास्ते कृतार्था न संशयः ॥ ८२ ॥
संसारकूपपतितं विषयैर्मुषितं क्षणम् ।
ग्रस्तं कालाहिनात्मानं कोऽन्यस्त्रातुमिहेश्वरः ॥ ८३ ॥

( ११ । ८ । ४१—४२ पिङ्गलः )

विशेषतस्तु कलौ भगवता एव कृतार्था इत्याह घोरेति । कालवशेन सर्वे स्वधर्म्मभ्रष्टा अपि यदि केचन वासुदेवपराः एतदेव स्पष्टयति संसारेति । आत्मानं जीवं अन्यो भगवतः इह कलौ । ईश्वरः प्रभुः । ननु विषयानां दुर्जयत्वात् कथं तन्मुषितेक्षणो रक्षणीयः उत्तरोत्तरभक्त्येत्यत्र भगवद्वचनमाह ॥ ८२–८३ ॥

बाध्यमानोपि मद्भक्तो विषयैरजितेंद्रियः ।
प्रायः प्रगल्भया भक्त्या विषयैर्नाभिभूयते ॥ ८४ ॥

( ११ । १४ । १८ श्रीकृष्णः )

बाध्यमानोपीति । प्रगल्भया समर्थया बाध्यमानोपि आकृष्यमाणोपि यतः अजितेंद्रियः । अजितेंद्रियोपि मद्भक्तः तरति किं पुनः परमभक्त इति भावः ॥ ८४ ॥

पुंश्चल्यापहृतं चित्तं कोन्यो मोचयितुं क्षमः ।
आत्मारामेश्वरमृते भगवन्तमधोक्षजम् ॥ ८५ ॥

( ११ । २६ । १५ ऐलः )

यः स्त्रैणमपि मोचयति तस्य विषयान्तरलुब्धमोचनमीपत्करमित्याह । पुरूरवा वाक्येन पुंश्चल्येति । पुंश्चल्या असाध्वेकरूपया स्त्रिया । यदाह स्थानं नास्ति क्षणं नास्ति नास्ति प्रार्थयिता नरः । तेन नारद नारीणां सतीत्वमुपजायते भगवन्तं विना कोऽन्यं क्षम इत्यर्थः । यतः । अधोक्षजं अधः कृतं अक्षजं इंद्रियविषयसुखं येन जितेंद्रियमिति यावत् एतत् कुतः यतो आत्मारामः । योगिभ्यो विशेषमाह । ईश्वरं सर्वनियंतारम् ॥ ८५ ॥

भक्त्योद्धवानपायिन्या सर्वलोकमहेश्वरम्
सर्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति सः ॥ ८६ ॥

( ११ । १८ । ४५ श्रीकृष्णः )

तस्माद्भगवद्भक्तिरेव भगवत्प्राप्त्युपायः इत्यत्र भगवद्वचनमाह । भक्त्योद्धवेति अनपायिन्या अव्यभिचारिण्या सर्वलोकमहेश्वरं इति नियंतृत्वेन स्थितिकारणत्वं दर्शितं सर्वेषां उत्पत्तिः अप्ययो विनाशश्च यस्मात् । कुतः ब्रह्मणोऽपि कारणं वेदस्य वा मा माम् । अतएव तत्कारणं मां ब्रह्मस्वरूपं वैकुंठनिवासिनम् । यद्वा ब्रह्मणो वेदस्य कारणं मां उपयाति सामीप्येन प्राप्नोति ॥ ८६ ॥

यथाग्निः सुसमृद्धार्चिः करोत्येधांसि भस्मसात् ।
तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नशः ॥ ८७ ॥
न साधयति मां योगो न सांख्यं धर्म्म उद्धव ।
न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता ॥ ८८ ॥
भक्त्याहमेकया ग्राह्यः श्रद्धयात्मा प्रियः सताम् ।
भक्तिः पुनाति मन्निष्ठा श्वपाकानपि संभवात् ॥ ८९ ॥

( ११ । १४ । १९–२१ श्रीकृष्णः )

किंच भक्तस्य प्रायश्चित्तान्तरापेक्षापि नास्तीत्याह यथेति । पाकाद्यर्थं प्रज्वलितो वह्निः यथा काष्ठानि भस्मीकरोति तथा रागादिवासनापि कथंचित् मद्विषया सती भक्तिः समस्तपापानीति । भगवानपि स्वभक्तिमहिमोभ्वर्येण संबोधयति । अहो उद्धवेति ॥ ८७ ॥

अत एवंभूतं श्रेयो नास्त्यन्यदित्याह न साधयतीति । न साधयति न वशीकरोति यथा भक्तिः साधयति अतएव ऊर्जिता योगादिभ्य उत्कृष्टाः ॥ ८८ ॥

सर्वपावनत्वाद्योर्जितेत्याह भक्त्येति श्रद्धया भक्तिः तया । संभवात् जातिदोषादपि यत्र मद्भक्तो जातिचाण्डालत्वं जहाति तत्र कर्मचाण्डालत्वं जहातीति वाच्यम् ॥ ८९ ॥

धर्मः सत्यदयोपेतो विद्या वा तपसान्विता ।
मद्भक्त्या ये तमात्मानं न सम्यक् प्रपुनाति हि ॥ ९० ॥

( ११ । १४ । २२ श्रीकृष्णः )

भक्त्यभावे अन्यत्साधनं स्वनुष्ठितमपि व्यर्थमित्याह द्वाभ्याम् धर्मोऽत्यनेन । विद्या उपासना आत्मविद्या वा आत्मानं अन्तःकरणं पुनाति नतु सम्यक् सावशेषमित्यर्थः ॥ ९० ॥

कथं विना रोमहर्षं द्रवता चेतसा विना ।
विनानंदाश्रुकलया शुद्ध्येद्भक्त्या विनाशयः ॥ ९१ ॥
वाग्गद्गदा द्रवते यस्य चित्तं हसत्यभीक्ष्णं रुदति क्वचिच्च ।
विलज्ज उद्गायति नृत्यते च मद्भक्तियुक्तो भुवनं पुनाति ॥ ९२ ॥

( ११ । १४ । २३–२४ श्रीकृष्णः )

प्रसंगाद्भक्तेर्लिंगं दर्शयन्नेतदेव निर्द्धारयितुमाह कथमिति। रोमहर्षादिकं विना कथं भक्तिर्गम्यते भक्त्या च विना कथमाशयः शुद्ध्येत् ॥ ९१ ॥

एनादृशी मद्भक्तिस्त्वाशयं पुनातीति किं वाच्यं यतो गद्गदवागादिलक्षणो मद्भक्ति-युक्तः सर्वलोकं पुनातीत्याह।

वाग्गद्गदेति। वाग्गद्गदा प्रेमभरेण चित्ताद्रवत्तत्तन्महामहिमश्रवणेन स्वतन्त्रोपि भक्तिपराधीन इति हसति। एतावंतं कालं तत्सेवां विना वंचितोस्मीति रोदिति। अथ जितं जितमिति गायति नृत्यति च विलज्जत्वं सर्वत्र बोद्धव्यम् ॥ ९२ ॥

यथाग्निना हेम मलं जहाति ध्मातं पुनः स्वं भजते च रूपम्।
आत्मा तु कर्मानुशयं विधूय मद्भक्तियोगेन भजत्यथो माम् ॥ ९३॥

( ११। १४। २५ श्रीकृष्णः )

अपिच न भक्त्यैव आत्मशुद्धिः नान्यत इति सदृष्टान्तमाह यथाग्निनेति। यथाग्निना ध्मातं तापितमेव हेम सुवर्णं अन्तर्मलं जहाति न क्षालनादिभिः स्वं निजं रूपं च भजते कर्मानुशयं कर्मवासनाम्। मां भजते मद्रूपतामापद्यते ॥ ९३ ॥

वरमेकं वृणोऽथापि पूर्णात्कामाभिवर्षणात्।
भगवत्युत्तमा भक्तिस्तत्परेषु तथा त्वयि ॥ ९४ ॥

( १२। १०। ३४ मार्कण्डेयः )

एवं भगवद्वचनमुपसंहृत्य विशेषैर्भक्तिरेव प्रार्थ्यते इत्यत्र मार्कण्डेयवचनमुदाहरति विश्वेशं प्रति वरमेकमिति। पूर्णात् कामाभिवर्षणात् सर्वदातुः त्वत्तो विश्वेश्वरात्। त्वयि च वैष्णवत्वात्। तत्परेषु भगवद्भक्तेषु साक्षात्परंपरया वा भगवत्संबंधिपरत्वेन एकवरत्वं द्रष्टव्यम्। यद्वा भगवत्युत्तमा भक्तिरित्येको वरः। तद्भक्तेषु त्वयि चेति वरद्वयम् तस्मात्साधूक्तं सर्वसाधनश्रेष्ठा भक्तिरिति ॥ ९४ ॥

तथापरे चात्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठाम् ।
त्वामेव धीराः पुरुषं विशन्ति तेषां श्रमः स्यान्न तु सेवया ते ॥९५॥

( ३। ५। ४५ देवाः )

ननु बहुषु मोक्षोपायेषु सत्सु कथं भक्तिरेव गरीयसीत्याशंक्य महदादिदेववाक्यमुदाहरति तथेति। तथा परे योगिनोपि त्वामेव विशन्ति। आत्मनो मनसो समाधिः संयमः स एव योगः तद्बलेन तन्निष्ठया प्रकृतिं मायां जित्वा बलिष्ठां दुर्जयाम्। तर्हि को विशेष इत्यत्र आह। तेषां योगिनां भक्त्या विना निष्फलो योगाभ्यासः। उभयकरणे च गौरवम्। भक्तिस्तु निरपेक्षसाधनमिति भावः ॥ ९५ ॥

अह्न्यापृतार्तकरणा निशि निःशयाना नाना मनोरथधिया क्षणभग्ननिद्राः।
दैवाहतार्थरचना मुनयोपि देव युष्मत्प्रसंगविमुखा इह संसरंति ॥ ९६ ॥

( ३। ९। १० ब्रह्मा )

तर्हि सर्वे भगवद्भक्तिमेव किमिति न कुर्वंति इत्याशंक्य विषयिनामभजनकारणं वक्तुं ब्रह्मवचनमाह अह्न्येति । अह्नि आपृतानि व्यापृतानि च आर्तानि निक्लिष्टानि करणानींद्रियाणि येषां रात्रो विषयसुखलवोपि नास्ति । यतो निःशयानाः नाना मनोरथधिया स्वप्नदर्शनेन च क्षणे क्षणे भग्ननिद्राः दैवेनाहताः सर्वतः प्रतिहता अर्थरचना अर्थोद्यमो येषां अतएव युष्मद्भजनविमुखाः अतएव संसारिणो भवंति मुनयोपि बहुशास्त्रमननशीला अपि ॥ ९६ ॥

७ येभ्यर्थितामपि च नो नृगतिं प्रपन्ना ज्ञानं च तत्त्वविषयं सहधर्म यत्र ।
नाराधनं भगवतो वितरन्त्यमुष्य संमोहिता विततया बत मायया ते ॥९७॥

( ३ । १५ । २४ ब्रह्मा )

अथ मुमुक्षुसाधारणहेतुं वक्तुं देववचनमाह येभ्यर्थितामिति । नोऽस्माभिः ब्रह्मादिभिरर्थितां नृगतिं मनुष्यजातिं प्रपन्नाः प्राप्ताः सन्तो हरेराराधनं भक्तिं न कुर्वंति । कीदृशीं नृगतिं यत्र यस्यां धर्मसहितं तत्त्वज्ञानं भवति । तदुभयसाधकत्वात् ते अमुष्य भवतो विस्तृतया मायया संमोहिता बतेति खेदे ॥ ९७ ॥

विश्वस्य यः स्थितिलयोद्भवहेतुराद्यो योगेश्वरैरपि दुरत्यययोगमायः ।
क्षेमं विधास्यति स नो भगवांस्त्र्यधीशस्तत्रास्मदीयविमृशेन कियानिहार्थः॥९८॥

( ३ । १६ । ३५ ब्रह्मा )

नन्वेवं भक्त्या विना माया न जीर्यते तथा मुग्धानां भक्तिर्दुर्लभेति कथं निस्तारः भगवत्कृपयेत्यत्र ब्रह्मवचनमाह । विश्वस्येति । त्र्यधीशः त्रयाणां गुणानामधीशः विमृशेन विचारेण ॥ ९८ ॥

यदा यस्यानुगृह्णाति भगवानात्मभावितः ।
स जहाति मतिं लोके वेदे च परिनिष्ठिताम् ॥ ९९ ॥

( ४ । २९ । ४६ नारदः )

एवं भगवदनुग्रहं प्रार्थयमानं त्यक्ताभिमानं भगवान् कदाचिदनुगृह्णाति यतो भक्तिर्भवतीत्याह । यदेति । यस्यायं अनुगृह्णाति अनुग्रहे हेतुः आत्मनि मनसि सर्वकर्तृत्वेन भावितः सन् तदा लोके लोकव्यवहारे वेदे च कर्मव्यवहारे निष्ठिताम् । मतिं त्यजति एवंविधस्तत्कृपया सर्वं विहाय श्रवणादिना तं भजत इति भावः ॥ ९९ ॥

श्रियमनुचरतीं तदर्थिनश्च द्विपदपतीन्विबुधांश्च यः स्वपूर्णः ।
न भजति निजभृत्यवर्गतंत्रः कथममुमुद्विसृजेत्पुमान् कृतज्ञः ॥१००॥

( ४ । ३१ । २२ नारदः )

एवं प्रसंगमुपसंहृत्य भगवतो भक्तवश्यतां दर्शयन् अवश्यभजनीयतामाह । श्रियमिति अनुचरतीमनुवर्तमानां श्रियं तदर्थिनः सकामान् द्विपदपतीन् नरेन्द्रान् विबुधान्

देवानपि यो न भजति नानुवर्तते यतः स्वेनैव पूर्णः । तथापि निजभृत्यवर्गतंत्र स्वभक्तगोष्ठ्यधीनो यस्तममुं । अयं भावः । पतीत्वेन श्रियं राजत्वेन राज्ञः देवत्वेन देवान्न भजते अनुचरत्वेनतु सर्वानेव भजत इति भगवतो भक्तवश्यतां प्रपंचयन्नेव एतादृशभक्तेर्दुर्लभत्वं दर्शयितुं श्रीशुकवचनमाह ॥ १०० ॥

राजन्पतिर्गुरुरलं भवतां यदूनां दैवं प्रियः कुलपतिः क्व च किंकरो वः ।
अस्त्वेवमंगभजतां भगवान्मुकुन्दो मुक्तिं ददाति कर्हिचिन्न हि भक्तियोगम् १०१

( ५ । ६ । १८ शुकः )

राजन्निति । राजन् परीक्षित् पतिः प्रभुर्गुरुर्हितोपदेष्टा भवतां पाण्डवानां यदूनां दैवमाराध्यः मुक्तिं ददाति परंतु प्रेमसहितं भक्तियोगं न ददाति तत्कृपां विना साधनान्तरैरपि भक्तिर्दुर्लभेति भावः ॥ १०१ ॥

सध्रीचीनो ह्ययं लोके पंथाः क्षेमो ऽकुतोभयः ।
सुशीलाः साधवो यत्र नारायणपरायणाः ॥ १०२ ॥

( ६ । १ । १७ शुकः )

तस्मात्पर्य्यवसितमाह । सध्रीचीनेति । अयं पंथाः विष्णुभक्तिमार्गः । सध्रीचीनत्वे हेतुः क्षेमः नाशरहितः यतः अकुतोभयः । यत्र यस्मिन् पथि वर्तंत इति शेषः नारायणपरायणाः न तु सकामाः ॥ १०२ ॥

ते देवसिद्धपरिगीतपवित्रगाथा ये साधवः समदृशो भगवत्प्रपन्नाः ।
तन्नोपसीदत हरेर्गदयाभिगुप्तान्नैषां वयं च न वयः प्रभवाम दण्डे ॥ १०३॥

( ६ । ३ । २७ यमः )

अकुतोभयत्वमेव दर्शयितुं यमवाक्यमाह । ते देवेति ये भगवन्तं प्रपन्नाः ते देवैः सिद्धैश्च परिगीतपवित्रगाथा वर्णितपवित्रगाथाः । अतस्तन्नोपसीदत तत्समीपमपि न गच्छत वयः कालोपि न प्रभवति । यत्र यमकालाभ्यामपि न भयं तत्र कुतोऽन्यस्मादित्यकुतोभयत्वम् ॥ १०३ ॥

न तस्य कश्चिद्दयितः सुहृत्तमो न वा प्रियो द्वेष्य उपेक्ष्य एव च ।
तथापि भक्तान् भजते यथा तथा सुरद्रुमो यद्वदुपाश्रितोऽर्थदः ॥ १०४ ॥

( १० । ३८ । २२ अक्रूरः )

ननु भक्तानेव रक्षतीति भगवतो वैषम्यं नेत्याह । न तस्येति दयितो वल्लभः सुहृत् निरपेक्षोपकारकः प्रियः सखा द्वेष्यः शत्रुः उपेक्ष्य उदासीनश्च यद्यपि तस्य कोपि नास्ति समत्वात्तथापि स्वभावात् यद्वत्सुरद्रुम उपासितस्यैवार्थं ददाति तथा भक्तान् भजते अनुगृह्णाति यथा यथावत् ॥ १०४ ॥

केवलेन हि भावेन गोप्यो गावो नगा मृगाः ।
येऽन्ये मूढधियो नागाः सिद्धा मामीयुरंजसा ॥ १०५ ॥

(११।१२।८ श्रीकृष्णः)

भक्तान् भजत इत्यत्र भगवद्वचनं प्रमाणयति। केवलेनैवेति। सत्संगलब्धेन केवलेनैव भावेन प्रीत्या नगाः यमलार्जुनादयः नागाः कालिया इति। यद्वा तदानीं तृणतरुलता गुल्मादीनामपि भगवति भावो गम्यते। तदुक्तं भगवतैव। अहो अमी देव वरामरार्चितं पादांबुजं ते सुमनः फलार्हणम्। नमंत्युपादाय शिखाभिरात्मनस्तमोपहत्यै तरुजन्मयत्कृते (भा०।१०।१५।५)। अहो अमीत्यनेन सिद्धाः कृतार्थाः सन्तः ईयुः प्रापुः तस्मात्साधूक्तं तेषां श्रमः स्यान्नतु सेवया तद्दत्याह ॥ १०५ ॥

भजंति ये विष्णुमनन्यचेतसस्तथैव तत्कर्मपरायणा नराः ।
विनष्टरागादिविमत्सरा नरास्तरंति संसारसमुद्रमाश्रमम् ॥ १०६ ॥
नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरंजनम् ।
कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम् ॥ १०७ ॥

(१।५।१२ नारदः)

तथैवानन्यचेतसः तेनैव तदर्पणार्थं श्रौतं स्मार्तं च कर्म कुर्वंतीति तत्कर्मपरायणाः। अतएव विनष्टरागादिदोषाः अत एव विमत्सराः आश्रमं संन्यासयोगादिपरिश्रमं विनापि ॥ १०६ ॥

किंच भक्तिहीनं कर्म बन्धनमेवेति कैमुतिकन्यायेनाह। नैष्कर्म्यमपीति। निष्कर्म ब्रह्म तदेककरणत्वात्। निष्कर्मतारूपं नैष्कर्म्यम्। अज्यतेनेनेत्यंजनं उपाधिः तन्निवर्तकं निरंजनं एवंभूतमपि ज्ञानं अच्युते भावो भक्तिः तद्वर्जितं चेत् अलमत्यर्थं न शोभते सम्यगपरोक्षाय न कल्पत इत्यर्थः। यद्वा ज्ञानमलं तन्नैष्कर्म्यं अथवा अलं महदज्ञानं तथा शश्वत् साधनकाले फलपाके अभद्रं दुःखं रूपं च यत् काम्यं कर्म यदप्यकारणमकाम्यं तच्चेति चकारस्यान्वयः। तदपि कर्म। ईश्वरेनार्पितं चेत् कुतः पुनः शोभते बहिर्मुखत्वे न सत्वशोधकत्वाभावात्। एतावता निरपेक्षसाधनत्वादिना भक्तिर्गरीयसीत्युक्तं सिद्धेर्मोक्षादपि गरीयस्त्वं द्रढयति ॥ १०७ ॥

आत्मारामाश्च मुनयो निर्ग्रंथा अप्युरुक्रमे ।
कुर्वंत्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः ॥ १०८ ॥

(१।७।१० सूतः)

आत्मारामेति। निर्ग्रंथा ग्रंथेभ्यो निर्गताः। तदुक्तं गीतासु। यदा ते मोहकलिलं इत्यनेन। यद्वा ग्रंथिरेव ग्रंथः निवृत्तहृदयग्रंथय इत्यर्थः। ननु मुक्तानां किं भक्त्येत्यादि सर्वाक्षेपपरिहारार्थमाह इत्थंभूतगुण इति वस्तुस्वभाव एव तथा तद्विवेकी तव भक्तिमेवाश्रयति इति भावः ॥ १०८ ॥

न नाकपृष्ठं न च सार्वभौमं न पारमेष्ठ्यं न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा समंजस त्वा विरहय्य कांक्षे ॥१०९॥
(६।११।२५ वृत्रः)

एवं पुरुषार्थेभ्यो भक्तिरुत्तमेत्याशयेन वृत्रासुरवचनमुदाहरति। न नाकपृष्ठमिति नाकपृष्ठं ध्रुवपदं ब्रह्मलोकादिकं च हेसमंजस निखिलसौभाग्यनिधे त्वा त्वां विरहय्य पृथक् कृत्वा भक्तिं हित्वा अन्यन्नेच्छामि ॥ १०९॥

तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भविष्यति ॥ ११० ॥
यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् ।
योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥ १११ ॥
तत्सर्वं भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।
स्वर्गापवर्गौ मद्धाम कथंचिद्यदि वांछति ॥ ११२ ॥
न किंचित्साधवो धीरा भक्त्या ह्येकांतिनो मम ।
वांछन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥ ११३ ॥
नैरपेक्ष्यं परं प्राहुर्निःश्रेयसमनल्पकम् ।
तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेत् ॥ ११४ ॥
न मय्येकांतभक्तानां गुणदोषोद्भवा गुणाः ।
साधूनां समचित्तानां बुद्धेः परमुपेयुषाम् ॥ ११५ ॥
एवमेतान्मयादिष्टाननु तिष्ठंति ये पथः ।
क्षेमं विंदंति मत्स्थानं यद्ब्रह्म परमं विदुः ॥ ११६ ॥
(११।२०।३१—३७ श्रीकृष्ण)

तदत्र प्रकरणार्थे भगवद्वचनं प्रमाणयन्नुपसंहरत्यासमाप्तेः। तस्मादिति तदात्मनः मयि आत्मा चित्तं यस्य तस्य श्रेयः। श्रेयः साधनं वा ॥ ११० ॥

तत्र हेतुः। यत्कर्मभिरिति। इतरैस्तीर्थयात्रा व्रतादिभिः श्रेयोभिः श्रेयः साधनैर्यत् यच्चाप्यं सत्वशुद्ध्यादि तत्सर्वमिति ॥ १११ ॥

अंजसा अनायासेनैव। स्वर्गमपवर्गं च मद्धाम वैकुंठं लभत एव वांछा तु नैवास्तीति उक्तं यदि वांछति ॥ ११२ ॥

एतत्सहेतुकं स्पष्टयति न किंचिदिति धीमतः यतो मम एकांतिनः मय्येव प्रीति युक्ता अतो मया दत्तमपि न गृह्णाति किं च वकुश्च वांछतीत्यर्थः। अपुनर्भव यत्कैवल्यम् ॥११३॥

आत्यन्तिकमपि कैवल्यं तदुपपादयति। नैरपेक्ष्यमिति नैरपेक्ष्यमेव परमुत्कृष्टं अनल्पकं महद् निःश्रेयसं फलम्। तत्साधनं वा प्राहुः मे भक्तिर्निराशिषः प्रार्थना कारणभूतापेक्षारहितस्य पुंसो भवेत् यद्वा मे निरपेक्षस्य या भक्तिः सा निराशिषो भवेदित्यर्थः ॥११४॥

अनेन च प्रकारेण सिद्धानां न गुणदोषा इति विरोधपरिहारमुपसंहरति। न मयीति गुणदोषैर्विहितप्रतिषिद्धैरुद्भवो येषां ते गुणाः पुण्यपापादयः। साधूनां निरस्तरागादीनां अतः समचित्तानां अतएव परमीश्वरं प्राप्तानां बुद्धेः परमुपेयुषाम्॥ ११५॥

इति श्रीमत्पुरुषोत्तमचरणारविन्दकृपामकरन्दविंदुप्रोन्मीलद्विवेकतैरमुक्तपरमहंस-
विष्णुपुरीग्रथितायां भागवतामृताब्धिलब्ध श्री भगवद्भक्तिरत्नावल्यां
प्रथमं विरचनम्॥

तदेवमुपसंहरति भगवान् एवमिति मे पथः मत्प्राप्त्युपायाननुतिष्ठंति ये ते क्षेमं कालमायादिरहितं मम लोकं विंदंति यत्परमं ब्रह्म तच्च विदुः॥ ११६॥

इति श्री भक्तिरत्नावल्यां टीकायां कान्तिमालायाम् प्रथमं विरचनम्॥

---

## अथ द्वितीयं विरचनम् ॥

सतां प्रसंगान्मम वीर्यसंविदो भवंति हृत्कर्णरसायनाः कथाः ।
तज्जोषणादाश्वपवर्गवर्त्मनि श्रद्धा रतिर्भक्तिरनुक्रमिष्यति ॥ १ ॥

( ३ । २५ । २४ कपिलः )

अथ भगवद्भक्तिकारणं निरूप्यते । तत्र परमकृपालुश्रीनारायणकरुणाकल्पवल्लीफलम् सत्संगः प्रधानमिति भागवताभिप्रायः । अतस्तमेव दर्शयितुं प्रथमं तावत् श्रीकपिलवचनमाह । सतामिति । वीर्यस्य सम्यग् वेदनं यासु ताः वीर्यसंविदः । हृत्कर्णयोः रसायनाः सुखदाः तासां जोषणात् सेवनात् । अपवर्गः अविद्यानिवृत्तिर्वर्त्म यस्मिन् । अविद्यानिवृत्त्या यः प्राप्यते इत्यर्थः । यद्वा मोक्षदो यस्तस्मिन् हरौ प्रथमं श्रद्धा ततो रतिस्ततो भक्तिः । अनुक्रमिष्यति क्रमेण भविष्यतीत्यर्थः । न केवलं प्रकृष्ट एव तथा किन्तु स्वल्पोपि सत्संगः ॥ १ ॥

सत्सेवया दीर्घयापि जाता मयि दृढा मतिः ।
हित्वावद्यमिमं लोकं गन्ता मज्जनतामसि ॥ २ ॥

( १ । ६ । २४ श्रीकृष्णः )

भक्तिं दत्वा नारदं प्रति भगवदाकाशवाणीं दर्शयति । सत्सेवया इति । अदीर्घयापि सतां सेवया अवद्यं निंद्यं दासीप्रसूतत्वाल्लोकं देहं हित्वा मज्जनतां मत्पार्षदतां गंतासि मद्भक्तो भविष्यस्येव मत्पार्षदस्तु दिव्येन नारदरूपेण भविष्यसीति भावः ॥२॥

तुलयाम लवेनापि न स्वर्गं न पुनर्भवम् ।
भगवत्संगिसंगस्य मर्त्यानां किमुताशिषः ॥ ३ ॥

( १ । १८ । १३ सूतः )

अतएव सत्संगः स्वर्गादिभ्योपि श्रेयानिति शौनकवाक्येनाह । तुलयामेति भगवत्संगिनो विष्णुभक्ताः तेषां संगस्य यो लवः अत्यल्पकालः तेनापि स्वर्ग्यं स्वर्गसुखं न तुलयाम । न समं पश्यामः न चापवर्गं संभावनायां लोट् । मर्त्यानां तुच्छाः आशिषो राज्याद्याः न तुलयामेति किमु वक्तव्यं तस्मात्सर्वतः सत्संगः श्रेयानिति भावः ॥ ३ ॥

यत्पादसंश्रया सूत मुनयः प्रशमायनाः ।
सद्यः पुनन्त्युपस्पृष्टाः स्वर्धुन्यापोनुसेवया ॥ ४ ॥

( १ । १ । १५ ऋषयः )

अथ तद्वाक्येनैव हेतुमाह। यत्पादसंश्रया इति। यत्पादः यस्य भगवतश्चरणः संश्रयो येषां अतएव प्रशमः अयनं वर्त्म येषां ते मुनयः उपस्पृष्टाः सन्निधिमात्रेण सेविताः सद्यः पुनंति। भक्तिप्रतिबंधकं पापं नाशयंतीत्यर्थः स्वधुनी गंगा तस्या आपः तत्पादान्निःसृता ननु तत्रैव तिष्ठंति अतस्तत्संबंधेनैव पुनंत्योपि अनुसेवया पुनंति ननु सद्यः यतः सतां हृदि सर्वात्मना भगवान् वर्तत इति सतामुत्कर्षः तद्युक्तमुक्तं सत्सेवया दीर्घयापीति भावः ॥४॥

नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया।

भगवत्युत्तमश्लोके भक्तिर्भवति नैष्ठिकी ॥ ५ ॥

(१।२।१८ सूतः)

सत्संगस्तु महता पुण्येन लभ्यते एवं सदा सत्संगस्य विष्णुभक्तिप्रदत्वे व्यतिरेक शंकापि नास्तीत्याह। सत्संगो विष्णुभक्तिं ददाति। नष्टप्रायेष्विति। अभक्तस्य स्वभावात्लेच्छादिशरीरारंभकं विद्यमानमपि अभद्रं पापं सत्संगे सति भक्तिप्रतिबंधकमित्यभिप्रेत्य प्रायग्रहणं भक्तिप्रतिबंधकेषु नष्टेष्वित्यर्थः। भागवतानां वैष्णवानां नित्यं सदा सेवया संगेन नैष्ठिकी निश्चला विक्षेपकाभावात् ॥ ५॥

अहो वयं जन्मभृतोद्यहास्म वृद्धानुवृत्त्यापि विलोमजाताः।

दौष्कुल्यमाधिं विधुनोति शीघ्रं महत्तमानामभिधानयोगः ॥ ६ ॥

(१।१८।१८ सूतः)

सोयं सत्संगः अधमानपि उद्धरतीत्याह सूतवाक्येन। अहो वयमिति। अहो इत्याश्चर्ये ह इति हर्षे वयमिति श्लाघायां बहुवचनम्। प्रतिलोमजाअपि अद्यजन्मभृतः सफलजन्मानः आत्मजाताः वृद्धानां भवताम्। अनुवृत्त्या आदरेण ज्ञानवृद्धः शुकस्तस्य सेवयेति वा यतो दुःकुलत्वं तन्निमित्तमाधिं पीडां महत्तमानां अभिधानयोगः लौकिकोपि संभाषणलक्षणसंबंधः विधुनोति अपनयति ॥ ६॥

येषां संस्मरणात्पुंसां सद्यः शुद्ध्यन्ति वै गृहाः।

किं पुनर्दर्शनस्पर्शपादशौचासनादिभिः ॥ ७ ॥

(१।१९।३३ परीक्षित)

आस्तामभिधानादिसंबंधः सतां स्मरणमपि शुद्धिहेतुरित्याह। येषामिति। कर्तृत्वेनविषयत्वेन च स्मरणसंबंधः यान् साधवः स्मरन्ति साधून् वा ये तेषां पुंसां गृहाः किं पुनः सन्निहितदेहेन्द्रियादिपादशौचं चरणक्षालनम् ॥ ७॥

दुरापा ह्यल्पतपसः सेवा वैकुंठवर्त्मसु।

यत्रोपगीयते नित्यं देवदेवो जनार्दनः ॥ ८ ॥

(३।७।२० विदुरः)

ननु तर्हि सर्वे किमिति साधूनेव न भजंत इत्यत आह। दुरापेति अल्पतपसः भगवताऽननुगृहीतस्येत्यर्थः। दुर्लभो वैकुंठस्य विष्णोः वर्त्म सुमार्गभूतेषु महत्सु यत्र येषु ॥ ८ ॥

तत्सेवया भगवतः कूटस्थस्य मधुद्विषः।
प्रतिरासो भवेत्तीव्रः पादयोर्व्यसनार्दनः ॥ ९ ॥

( ३ । ७ । १९ विदुरः )

तत्फलमाह सत्सेवयेति। सत्सेवा हरिकथाश्रवणादि ततो मधुद्विषः पादयोर तिरासः प्रेमोत्सवः तीव्रः दुर्वारः स्वाभाविकं व्यसनं संसारं अर्द्दयतीति तथा ॥ ९ ॥

प्रसंगमजरं पाशमात्मनः कवयो विदुः।
स एव साधुषु कृतो मोक्षद्वारमपावृतम् ॥ १० ॥
तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम्।
अजातशत्रवः शांताः साधवः साधुभूषणाः ॥ ११ ॥
मय्यनन्येन भावेन भक्तिं कुर्वंति ये दृढाम्।
मत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबांधवाः ॥ १२ ॥
मदाश्रयाः कथामृष्टाः शृण्वंति कथयंति च।
तपंति विविधास्तापा नैतान्मद्गतचेतसः ॥ १३ ॥
त एते साधवः साध्वि सर्वसंगविवर्जिताः।
संगस्तेष्वथते प्रार्थ्यः संगदोषहरा हि ते ॥ १४ ॥

( ३ । २५ । १९—२३ कपिलः )

ननु संगत्वाविशेषादसत्संगवत् सत्संगोपि श्रेयोर्थिभिः हेय एव। नेत्याह। प्रसंगेति। अजरं दुश्छेद्यं पाशं बंधनं आत्मनो जीवस्य स एव संगः साधुविषयश्चेत् मोक्षद्वारमपावृतं निरावरणं स्यादेव। सत्संगो भक्तिं दत्त्वा अनायासेन मोक्षप्रदमित्यर्थः ॥ १० ॥
प्रसंगात्साधूनां लक्षणं दर्शयन् अमुमेवार्थं कपिलवचनेनाह चतुर्भिः। तितिक्षव इति। साधवः शास्त्रानुवर्तिनः साधुसुशीलं भूषणं येषाम् ॥ ११ ॥

किंच मय्यनन्येनेति अनन्येन निष्कामेन दृढामव्यभिचारिणीं मत्कृते मत्प्रीत्यर्थः ॥ १२ ॥

किंच मदाश्रयेति एतान् साधून् आध्यात्मिकादयः तापा न तपंति न व्यथयंति यतो मद्गतचित्तान्। यद्वा ये तापैर्नाभिभूयंते ते साधव इत्यर्थः ॥ १३ ॥

एवं साधून् लक्षयित्वा देवहूतिमुपदिशंति । न एत इति । अंतर्बहिः संगशून्या अनपवाह प्रार्थ्य इति । कारुणिकस्वभावत्वात् । कृपयिष्यंतीति भावः ॥ १४ ॥

भक्तिं मुहुः प्रवहतां त्वयि मे प्रसंगो भूयादनंतमहतामलाशयानाम् ।
येनांजसोल्वणमुरुव्यसनं भवाब्धिं नेष्ये भवद्गुणकथामृतपानमत्तः॥१५॥
तेन स्मरंत्यतितरां प्रियमीशमर्त्यं ये चान्वदः सुतसुहृद्गृहवित्तदाराः ।
येत्वब्जनाभ भवदीयपदारविंदसौगंध्यलुब्धहृदयेषु कृतप्रसंगाः ॥१६॥

(४।९।११—१२ ध्रुवः)

तस्मात्संगत्वाविशेषादित्यपि वचः शून्यं एवं सत्संगः प्रार्थ्य इत्युक्तमिति । प्रार्थितेपीति ध्रुववाक्येनाह भक्तिमिति । भक्तिं त्वयि प्रवहतां सातत्येन कुर्वतां ननु मोक्षं किमिति न वांछसीत्यत आह । येन सत्संगेन अंजसा अयत्नत एव उरू व्यसनानि यस्मिन् । तं नेष्ये पारं गमिष्यामि भगवद्गुणकथयैवामृतस्य पानेन मत्तः सन् मोक्षे त्वत्कथामृतपानं नास्तीति भावः ॥ १५ ॥ कथामृतपानमत्तः।

कथामृतपानस्य मादकत्वमाह । ते न स्मरंतीति । हे ईश अतितरां प्रियमपि मर्त्यं देहम् स्मरन्ति नानुसंदधते ये च सुतादयः मर्त्यमनुसंबंधाः तानपि के ते न स्मरंति ये कृतप्रसंगाः केषु भवदीयपदारविंदसौगंध्ये लुब्धं हृदयं येषां तेषु । तत्प्रसंगेन हरिकथामृतं पीत्वा मत्ताः संतो न स्मरन्ति । तु शब्देन अन्येषां केवलं योगयागादिनिष्ठानां देहाभिमानिनां निवृत्तिं दर्शयति ॥ १६ ॥

तेषामहं पादसरोजरेणुमार्या वहेयाधिकिरीटमायुः ।
नित्यं यदा विभ्रत आशु पापं नश्यत्यमुं सर्वगुणा भजन्ति ॥ १७ ॥

सत्संगस्य की वार्ता, तत्पादरेणु-अभिप्रायम् (४।२१।४३ पृथुः)

आस्तां तत्संगः तच्चरणरेणुरपि श्लाघ्या इति पृथुवचनेनाह । तेषामिति । हे आर्य्याः आ आयुः यावज्जीवं अधिकिरीटं मुकुटस्योपरि वहेयेति प्रार्थनायां लिङ् यत् यं रेणुं विभ्रतः पुरुषस्य आशु पापं नश्यति किं पुनः नित्यदा विभ्रतः किंच अमुं रेणुं सर्वे गुणा भजंति यद्वा अमुं रेणुवाहकं रेणुवाहकः सर्वगुणाश्रयो भवतीत्यर्थः ॥ १७ ॥

संगमः खलु साधूनामुभयेषां च संमतः ।
यत्संभाषणसंप्रश्नः सर्वेषां वितनोति शम् ॥ १८ ॥

(४।२२।१९ सनतकुमारः)

तमिमं सत्संगं अभिनंदति सनत्कुमारवचनेन । संगमेति । उभयेषां प्रच्छकानां वक्तॄणां च येषां संभाषणसहितः संप्रश्नः सर्वेषां श्रोतॄणामपि शं सुखं विस्तारयति सोयं सत्संगः प्रार्थ्य इत्युक्तम् ॥ १८ ॥

अथानघाङ्घ्रेस्तव कीर्तितीर्थयोरन्तर्बहिः स्नानविधूतपाप्मनाम् ।
भूतेष्वनुक्रोशसुसत्वशीलिनां स्यात्संगमोऽनुग्रह एष नस्तव ॥ १९ ॥

( ४ । २४ । ५८ रुद्रः )

परेभ्योपि सत्संगप्रार्थनमुपदेष्टव्यमिति प्रचेतसःप्रति रुद्रोपदेशेनाह । अथेति अथेत्युपदेशे भवद्भिरेवं परमेश्वराच्च प्रार्थ्यमिति किं तत् अनघौ अघहरावंघ्री यस्य तव कीर्तिर्यशः तीर्थं गंगा तयोः क्रमेणान्तर्बहिः स्नानाभ्यां विधूताः पाप्मानो येषां अतएव भूतेषु अनुक्रोशः कृपासु सत्वं च रागादिरहितं चित्तं शीलं चार्जवादि विद्यते येषां तेषां संगमोऽस्माकं स्यात् एष नस्त्वदनुग्रहः ॥ १९ ॥

यत्रेड्यंते कथामृष्टास्तृष्णायाः प्रशमो यतः ।
निर्वैरं यत्र भूतेषु नोद्वेगो यत्र कश्चन ॥ २० ॥
यत्र नारायणः साक्षान्न्यासिनां परमा गतिः
प्रस्तूयते सत्कथासु मुक्तसंगैः पुनः पुनः ॥ २१ ॥
तेषां विचरतां पद्भ्यां तीर्थानां पावनेच्छया ।
भीतस्य किन्न रोचेत तावकानां समागमः ॥ २२ ॥

( ४ । ३० । ३५—३७ प्रचेतसः )

तस्माद्युक्तमुक्तम् संगदोषहरः सत्संगः प्रार्थनीय इति प्रचेतसां वाक्येन सप्रपंचमाह त्रिभिः यत्र येषु यतः याभ्यः कथाभ्यः निर्वैरं वैराभावः स्वाभाविकमपि तृष्णायसंगाद्यद्धं ते सत्संगादेव क्षीयते इति ॥ २० ॥

तथा यत्र साक्षात् प्रस्तूयते अत एव ताः सत्कथाः ॥ २१ ॥

पद्भ्यां तीर्थानां पावनेच्छया सत्संगात्तीर्थान्यपि शुध्यन्तीत्यर्थः । भीतस्य संसारात् तस्मात्संगं विना संसारनिस्तारो न इति भावः ॥ २२ ॥

महत्सेवां द्वारमाहुर्विमुक्तेस्तमोद्वारं योषितां संगिसंगम् ।
महान्तस्ते समचित्ताः प्रशान्ता विमन्यवः सुहृदः साधवो ये ॥२३॥
ये वा मयीशे कृतसौहृदार्था जनेषु देहम्भरवार्तिकेषु ।
गृहेषु जायात्मजरातिमत्सु न प्रीतियुक्ता यावदर्थाश्च लोके ॥२४॥

( ५ । ५ । २—३ ऋषभः )

नन्वेवं सत्संगः श्रेयानस्तु असत्संगेन किमपराद्धं येन स न प्रार्थ्य इत्यत्र सत्संगस्य असत्संगस्य च फलं दर्शयन् परिचर्यार्थं साधून् लक्षयति द्वाभ्यां । महत्सेवां ये वाम-यीशेत्याभ्याम् तमसः संसारस्य द्वारं योषितां संगिनः तेषां संगम् । महतां लक्षणमाह

साद्धैर्न महान्त इति साधवः सदाचारा मर्यादा कृतं सौहृदमेव अर्थः पुरुषार्थो येषां वा शब्देनान्यत्र निरपेक्षस्यैव अस्य लक्षणत्वं दर्शयति देहं बिभर्तीति देहंभरा विषयवार्तैव न स्वधर्मो विषया येषु जनेषु तेषु च गृहेषु दारमित्रं धनं वा यावदर्थमेवार्थो येषामिति मध्यमपदलोपी समासः। देहनिर्वाहाधिकस्पृहाशून्याः ॥ २३–२४ ॥

गुरुर्न स स्यात्स्वजनो न स स्यात्पिता न स स्याज्जननी न सा स्यात् ।

दैवं न तत्स्यान्न पतिश्च स स्यान्न मोचयेद्यः समुपेतमृत्युम् ॥ २५ ॥

(५। ५। १८ ऋषभः)

अत्र गृहादिषु अनुपकारकत्वमप्रीतिबीजमाह गुरुर्न स स्यादिति । समुपेतः संप्राप्तो मृत्युः संसारो येन तं ततो भक्तिमार्गोपदेशेन यो न मोचयेत् स गुर्वादिर्न भवतीत्यर्थः। यद्वा यस्तं मोचयितुं न शक्नुयात् अतस्तस्य गुर्वादिर्न स्यात् इति निषेधः तेन गुरुणा न भाव्यमित्यादि ततश्च स पिता न स्यात् इति पुत्रोत्पत्तौ यत्नो न कार्य इत्यर्थः। दैवं देवता न स्यादिति तेन तस्य पूजा न ग्राह्येत्यर्थः। एवमन्यदपि द्रष्टव्यं भगवद्भजनानुपयुक्तं गृहादि तु सुतरामनुपकारकमिति भावः ॥ २५ ॥

मागारदारात्मजवित्तबंधुषु संगो यदि स्याद्भगवत्प्रियेषु नः ।

यः प्राणवृत्त्या परितुष्ट आत्मवान् सिध्यत्यदूरात् न तथेंद्रियप्रियः ॥२६॥

(५। १८। १० प्रह्लादः)

अत्रैवार्थे प्रह्लादवचनमाह मागारेति । यदि भाग्ययोगाद्भगवत्प्रियेष्वेव संगः स्यान्नान्यत्र यतः भगवत्प्रियसंगी प्राणधारणमात्रेण परितुष्टः यथा दूरात् शीघ्रं सिध्यति न तथेंद्रियप्रियो गृहाद्यासक्तः सन् सिद्ध्यत्येवेति भावः ॥ २६ ॥

अहो नृजन्माखिल जन्म शोभनं किं जन्मभिस्त्वपरैरप्यमुष्मिन् ।

न यद्धृषीकेशयशः कृतात्मनां महात्मनां वः प्रचुरः समागमः ॥ २७ ॥

ननु असंभावनादिकुतर्का शतसंकुले मनसि कथं सत्संगः प्रभविष्यतीत्याशंक्य किं बहुना स्वल्पोपि सत्संगः श्रेयानिति रहूगणवचनेनाह द्वाभ्याम्। अहो नृजन्मेति । अखिल जन्म शोभनं नृजन्मैव न परं श्रेष्ठं येभ्यो देवादिजन्मभ्यः तैरपि किं अमुष्मिन् स्वर्गेऽपि जन्मभिः किं न किंचित् यतः येषु जन्मसु यत्र स्वर्गे वा महात्मनां समागमः प्रचुरो न भवति हृषीकेशस्य यशसा कृतः शोधित आत्मा यैस्तेषां वः जडभरतादीनां युष्माकम् ॥ २७ ॥

नैवाद्भुतं त्वच्चरणाब्जरेणुभिर्हतांहसो भक्तिरधोक्षजेऽमला ।

मौहूर्तिकाद्यस्य समागमान्मे दुस्तर्कमूलोपगतोऽविवेकः ॥२८॥

(५। १३। २१—२२ रहूगणः)

संगफलमाह सततमुपासितैस्त्वत्पदरेणुभिर्हतमंहो यस्य अधोक्षजे निर्मला भक्तिर्भवतीति नैवाद्भुतं यस्य तव मुहूर्तमात्रभावात् समागममात्रादपि दुस्तर्केण बद्धमूलोपि ममाविवेको नष्टः ॥ २८ ॥

नैषां मतिस्तावदुरुक्रमांघ्रिं स्पृशत्यनर्थापगमो यदर्थः ।
महीयसां पादरजोभिषेकं निष्किंचनानां न वृणीत यावत ॥२६॥

(७।५।३२ प्रह्लादः)

तस्माच्चरणरेणुप्रसादादेव भक्तिर्नान्यथेत्याह ॥ नैषामिति ॥ एषां भगवद्भक्तिमभीप्सतां अनर्थापगमः दुःखनिवृत्तिर्यदर्थः यस्य भगवच्चरणस्पर्शस्य अर्थः । न वृणीत न आशास्ते ॥ २९ ॥

तस्मादमूस्तनुभृतामहमाशिषोज्ञ आयुःश्रियंविभवमैन्द्रियमाविरिंच्यात ।
नेच्छामि ते विलुलितानुरुविक्रमेण कालात्मनोपनय मां निजभृत्य-
पार्श्वम् ॥३०॥

(७।९।२४ प्रह्लादः)

एवं प्रकरणार्थं सविशेषं प्रह्लादवचनेनोपसंहरति द्वाभ्यां तस्मादिति । यस्मादेवं तस्मात् आशिषः भोगान् ज्ञः तत्परिपाकं विद्वान् अहं ऐंद्रियं इंद्रियैर्भोग्यं ब्रह्मणो भोगमभिव्याप्य किमपि नेच्छामि । ते कालात्मना उरुविक्रमेण विलुलितान् विध्वस्तान् अणिमादीनपीत्यर्थः ॥ ३० ॥

एवं जनं निपतितं प्रभवाहिकूपे कामाभिकाममनु यः प्रपतन् प्रसंगात ।
कृत्वात्मसातसुरर्षिणा भगवन् गृहीतः सोहं कथं नु विसृजे तव भृत्य-
सेवाम् ॥३१॥

(७।९।२८ प्रह्लादः)

यथा त्वया नु कंपितोस्मि एवं नारदेनात्मसात्कृत्वा पूर्वमनुगृहीतः सोहं कथं नु त्वद्भृत्यसेवां विसृजामि कथंभूतो गृहीतोस्मि प्रभव एवाहियुक्तः कूपस्तस्मिन्कामानभितः कामयमानं जनं निपतितमनुप्रसंगात् प्रपतन् योऽहं । तु देवं त्वद्भृत्यस्य श्रीनारदस्यानुग्रहेण त्वयात्यंतमनुकंपितोस्मि अयमेव च मे परमोनुग्रहः न पुनरिदमतितुच्छं मत्प्रार्थनादि॥३१॥

---

* रहू गणैतत्तपसा न याति
न चेज्यया निर्वपणाद् गृहाद्वा )
न च्छन्दसा नैव जलाग्नि सूर्यै-
र्विना महत् पादरजोऽभिषेकम् ॥
५ । १२ । १२ । जड़भरतः ।

तदेव जड़भरतवाक्येनाह । महत् सङ्गं विना अन्योपायैर्न समर्थः । अतो महत् सङ्गः परम फलरूपः ॥

* अयं श्लोकः क्वचिदधिकः पाठो दृश्यते ॥

यत्संगलब्धं निजवीर्यवैभवं तीर्थं मुहुः संस्पृशतां हि मानसम् ।
हरत्यजोन्तः श्रुतिभिर्गतोमलं को वै न सेवेत मुकुंदविक्रमम् ॥ ३२॥

( ५ । १८ । ११ प्रह्लादः )

तस्मात्फलितमाह । यत्संगलब्धमिति । येषां भगवत्प्रियाणां संगाल्लब्धं मुकुंदस्य विक्रमं श्रुतिभिः श्रवणादिभिः संस्पृशतां सेवमानानां पुंसां अंतर्गतो यो मानसं मलं दुर्वासनां हरति किं तद्विक्रमं निजमसाधारणं वीर्यवैभवं प्रभावो यस्य तीर्थं तु गंगादि मुहुः संस्पृशतां अंगजं केवलं पापं हरति तान् भागवतान् को वै न सेवेतेत्यन्वयः ॥ ३२ ॥

अहं भक्तपराधीनो ह्यस्वतंत्र इव द्विज ।
साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः ॥ ३३ ॥

ननु किमंतरा साधुसेवया भगवानेव किमिति साक्षान्न सेव्यते स्वतंत्रो हि स इति चेत् न तस्य भक्तपराधीनत्वात् भक्तानुग्रहैकलभ्यत्वादित्यत्र श्रीवैकुंठनाथवचनमाह षड्भिः । अहमित्यादिभिः । हे द्विज दुर्वासः पराधीनः कायेन तदधीनक्रियइति । वचसा अस्वतंत्रः तदधीनवरदानादिर्ग्रस्तहृदयः वशीकृतचित्तः । तदनुरुद्धसंकल्पादिभिः साधुभिर्भक्तैर्ये भक्ताः त एव साधव इत्यर्थः ॥ ३३ ॥

नाहमात्मानमाशासे मद्भक्तैःसाधुभिर्विना ।
श्रियं चात्यन्तिकीं ब्रह्मन् येषां गतिरहं परा ॥ ३४ ॥
ये दारागारपुत्राप्तान् प्राणान्वित्तमिमं परम् ।
हित्वा मां शरणं जाताः कथं तांस्त्यक्तुमुत्सहे ॥ ३५ ॥
मयि निर्बद्धहृदयाः साधवः समदर्शिनः ।
वशं कुर्वंति मां भक्त्या सत्स्त्रियः सत्पतिं यथा ॥३६॥
मत्सेवया प्रतीतं च सालोक्यादि चतुष्टयम् ।
नेच्छंति सेवया पूर्णाः कुतोन्यत् कालविप्लुतम् ॥ ३७ ॥
साधवो हृदयं मह्यं साधूनां हृदयं त्वहम् ।
मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपि ॥ ३८ ॥

( ९ । ४ । ६३—६८ श्रीकृष्णः )

न आशासे न स्पृहयामि ॥ ३४ ॥

एतत्प्रपश्यति भगवान् ये दारागारेत्यनेन । इमं परं च लोकं हित्वा ॥ ३५ ॥

ननु स्वहितार्थं शरणमागतानां कथं त्वं धरय इत्यत्र सदृष्टान्तमाह मय ति । स्वार्थ-प्रवृत्ता अपि सत् स्त्रियः सत्पतिम् इव । अन्यथा तस्यापि कुपतित्वप्रसंगादित्यर्थः ॥ ३६ ॥

किंच निष्कामा एव न इत्याह । मत्सेवयेति । प्रतीतं प्राप्तमपि अन्यत्स्वर्गादि ॥ ३७ ॥

किंबहुना साधवो हृदयमिति । मह्यं मम तस्मात्साधूनां अनुग्रहं विना भगवान् दुर्लभ इति समुदायार्थः ॥ ३८ ॥

भवद्विधा महाभागा निषेव्या अर्हसत्तमाः ।
श्रेयस्कामैर्नृभिर्नित्यं देवाः स्वार्था न साधवः ॥ ३६ ॥
( १० । ४८ । ३० श्रीकृष्णः )

ननु देवनांतरमाराध्यैव भगवानेव प्राप्तव्यः किं मनुष्यैरिति नेत्यत्राक्रूरं प्रति भगवद्वचनमाह । भवद्विधेति । श्रेयस्कामैर्मद्भक्तिकामैः स्वार्थाः स्वकार्यसाधनपरा देवाः । साधवस्तु केवलं परानुग्रहपराः परमार्थतस्तुल्यौ एव सेव्याः त एव देवा इति ॥ ३९ ॥

भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युतसत्समागमः ।
सत्संगमो यर्हि तदैव सद्गतौ परावरेशे त्वयि जायते मतिः ॥४०॥
/ ( १० । ५१ । ५३ मुचुकुन्दः )

नित्यं मद्भक्तौ प्राप्तायामपि । देवताराधनापेक्षया सद्यः फलत्वाच्च सत्संग एव श्रेयानिति मुचुकुंदवचनेनाह भवापवर्ग इति । भो अच्युत भ्रमतः संसरतो जनस्य त्वदनुग्रहेण यदा भवस्य बंधस्य अपवर्गः अंतो भवेत् प्राप्तकालीनः* स्यात् । तदा सतां संगमो भवेत् यदा च सत्संगमो भवेत् तदैव नतु विलंबेन सर्वसंगनिवृत्त्या कार्यकारणनियंतरि त्वयि भक्तिर्भवति । ततो मुमुक्षुर्मुच्यते तस्मात्सत्संगं विना न सद्यो भक्तिरिति तात्पर्यार्थः ॥४०॥

नह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः । - ३।३
ते पुनन्त्युरुकालेन दर्शनादेव साधवः ॥ ४१ ॥
( १० । ४८ । ३१ ॥ १० । ८४ । ११ श्रीकृष्णः )

एतदेव सद्यः फलत्वं स्पष्टयति । न ह्यम्मयानीति । अम्मयानि तीर्थानि किं नहि । अपि तु भवंत्येव तथा देवा अपि किंतु विलंबशीघ्रत्वे विशेष इत्यर्थः । पुनंतीति तथा च क्षीणपापस्य कृष्णभक्तिः सुलभैव ॥ ४१ ॥

अहो वयं जन्मभृतो लब्धं कार्त्स्न्येन तत्फलम् ।
देवानामपि दुष्प्रापं यद्योगेश्वरदर्शनम् ॥ ४२ ॥

---

* प्राप्तकालः स्यादिति पाठान्तरम् ॥

किं स्वल्पतपसां नृणामर्चायां देवचक्षुषाम् ।

दर्शनस्पर्शनप्रश्नप्रह्वपादार्चनादिकम् ॥ ४३ ॥

( १० । ८४ । ९ । १० श्रीकृष्णः )

किं च अलं देवसत्संगयोः कथमपि साम्यशंकयापि यतो देवानामपि दुर्लभः सत्संग इति श्रीकृष्णवचनेनाह द्वाभ्याम् । अहो वयमिति । जन्मभृतः सफलजन्मानः तत्फलं जन्मफलं किं तत् यद्योगेश्वराणां सतां युष्माकं दर्शनादिकं यतो युष्माकं दर्शनमेव तावत् देवानामपि दुष्प्रापं अस्माकं तु स्वल्पतपसां तीर्थस्नानादिमात्रेण तपोबुद्धिमतां तथा अर्चायां प्रतिमायां देवचक्षुषां तेषां योगेश्वरदर्शनादिकमपि घटितमित्यहोभाग्यम् ॥ ४२-४३ ॥

नाग्निर्न सूर्यो न च चंद्रतारका न भूर्जलं खं श्वसनोथ वाङ् मनः ।

उपासिता भेदकृतोहरंत्यघं विपश्चितो घ्नंति मुहूर्तसेवया ॥४४॥

यस्यात्मबुद्धिःकुणपे त्रिधातुके स्वधीःकलत्रादिषु भौमइज्यधीः ।

यत्तीर्थबुद्धिश्च जले न कर्हिचित् जनेष्वभिज्ञेषु स एव गोखरः ॥ ४५ ॥

( १० । ८४ । १२-१३ श्रीकृष्णः )

ननु पापं भक्तिप्रतिबंधकं पापनाशकाश्चाग्न्यादयो देवाः प्रसिद्धा इतितत्राह । नाग्नि- रिति वाङ्मनसयोरुपासनादिविषयत्वं ब्रह्मत्वेन* श्रौतम् । अघं भक्तिप्रतिबंधकं सर्वं वा पापं अत्र हेतुः भेदकृतः स्वार्थपरत्वात् कालभेदकर्तारः स्वपदभेददर्शिनो वा विपश्चितस्तत्त्वं- मात्मीयत्वेन पश्यंतो निरस्तभेदाः मुहूर्तमात्रसेवयैव पापं घ्नंतीति अतोपि त एव श्रेष्ठाः॥४४॥

किं च तान् विहाय अन्यत्र आत्मादिबुद्ध्या सज्जमानोऽतिमंद इत्याह । यस्यात्मबुद्धि- रिति । आत्मबुद्धिः अहमिति बुद्धिः त्रयो धातवो वातपित्तश्लेष्माणः प्रकृतयो यस्य तस्मिन् कुणपे शरीरे स्वधीः स्वीय इति बुद्धिः भौमे भूविकारे इज्यधीः देवताबुद्धिः । जले यस्य तीर्थबुद्धिः अभिज्ञे षु महत्सु तत्त्ववित्सु यस्य ताः बुद्धयो न संति स एव गोष्वपि खरः दारुणः अत्यविवेकी गवां तृणाधिभारवाहः खरो गर्दभ इति वा ॥ ४५ ॥

साधवो न्यासिनः शान्ता ब्रह्मिष्ठा लोकपावनाः ।

हरंत्यघं तेंगसंगात्तेष्वास्तेह्यघभिद्धरिः ॥ ४६ ॥

( ९ । ९ । ६ भगीरथः )

ननु सतां पापनाशकत्वे किं सामर्थ्यं तत्र गंगां प्रति भगीरथवचनेनाह साधव इति । ते तव अघं हरन्ति ते स्वांगसंगात् हरिष्यंतीत्यर्थः । हि यतः तत्संगिनामपि अघभित् हरिस्तेषु भक्त्या शुद्धान्तःकरणेषु प्रकट आस्ते ॥ ४६ ॥

---

* यो वाचं ब्रह्मेत्युपास्ते (छा० ७ । २ । २ ) यो मनो ब्रह्मेत्युपास्ते ( छा० ७ । ३ । २ ) इति अधिकः पाठः ।

भूतानां देवचरितं दुःखाय च सुखाय च ।
सुखायैव हि साधूनां त्वादृशामच्युतात्मनाम् ॥ ४७ ॥
भजंति ये यथा देवान् देवा अपि तथैव तान् ।
छायेव कर्मसचिवाः साधवो दीनवत्सलाः ॥ ४८ ॥

( ११ । २ । ५-६ वसुदेवः)

किं च देवा दुःखहेतवोपि साधवस्तु केवलं सुखहेतवोऽतो दुर्लभस्तत्संग इति नारदं प्रति वसुदेववचनेनाह । भूतानांप्राणिनां देवानाञ्चरितं प्रवृत्तिः त्वादृशां नारदादीनाम्॥४७

अत्र हेतुः किं च सुखं कुर्वंतोपि देवा भजनानुसारेण कुर्वंति न तथा साधव इत्याह । भजंतीति देवा अपि तथैव भजंति फलं प्रयच्छंतीत्यर्थः । अनुकरणे दृष्टान्तः छायेव यतस्ते कर्मसचिवाः तत्तत्कर्मानुरोधिनः साधवस्तु दीनमात्रे वत्सलाः दुःखं परिजिहीर्षवः ॥ ४८ ॥

दुर्लभो मानुषो देहो देहिनां क्षणभंगुरः ।
तत्रापि दुर्लभं मन्ये वैकुंठप्रियदर्शनम् ॥ ४९ ॥

( ११ । २ । २९ विदेहः )

* तस्माज्जनकवचनेनोपसंहरति । दुर्लभेति । बहवो देहा भवंति येषां ते देहिनो जीवाः तेषां क्षणभंगुरोपि मानुषो देहो दुर्लभः । परमपुरुषार्थसाधनत्वात् वैकुंठः प्रियो येषां वैकुंठस्य वा प्रिया ये तेषां दर्शनं तथा च यो मानुष्यं प्राप्य साधूपासनया भगवद्भक्तिं न साधयति स दुर्मतिरिति भावः ॥ ४९ ॥

न रोधयति मां योगो न साङ्ख्यं धर्म एव च ।
न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणा ॥ ५० ॥
व्रतानि यज्ञः छंदांसि तीर्थानि नियमा यमाः ।
यथावरुन्धे सत्संगः सर्वसंगापहो हि माम् ॥ ५१ ॥
सत्संगेन हि दैतेया यातुधानाः खगा मृगाः ।
गन्धर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः ॥ ५२ ॥
विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोऽन्त्यजाः ।
रजस्तमःप्रकृतयस्तास्मिन्तास्मिन्युगे युगे ॥ ५३ ॥

---

* तस्मादेव भजनापेक्षया निरुपाधिकारणिकत्वेनोपादेयत्वे साधुभजनं श्रेय इति जनकवचनेनोपसंहरति । इति पाठान्तरम् ।

बहवो मत्पदं प्राप्तास्त्वाष्ट्रकायाधवादयः ।
वृषपर्वा बलिर्बाणो मयश्चापि विभीषणः ॥ ५४ ॥
सुग्रीवो हनुमान् ऋक्षो गजो गृध्रो वणिक्पथः ।
व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथापरे ॥ ५५ ॥
ते नाधीतश्रुतिगणा नोपासितमहत्तमाः ।
अव्रता ततपसः सत्संगान्मामुपागताः ॥ ५६ ॥

( ११ । १२ । १–७ श्रीकृष्णः )

अपि च अधिकारिनियमाभावात सर्वसाधनेभ्यः श्रेयान् सत्संगः इति सदृष्टान्तं उद्धवं प्रति भगवद्वचनेनाह सप्तभिः । नरोधयतीत्यादिना । न रोधयति न वशी करोति । योग आसनादिः । सांख्यं तत्त्वानां विवेकः । धर्म्मः सामान्यतोऽहिंसादिः । स्वाध्यायो वेदजपःतपःकृच्छ्रादि । त्यागः संन्यासः । इष्टापूर्तं इष्टंचपूर्तं च तत्रेष्टं अग्निहोत्रादिपूर्तं कूपारामादिनिर्माणं । दक्षिणाशब्देन सामान्यतो दानं लक्ष्यते ॥ ५०–५१ ॥

किं च भगवतो वशीकरणे सत्संग एव श्रेष्ठ इत्याह । व्रतानीति । व्रतानि एकादश्यादीनि । यज्ञो देवपूजा । छंदांसि रहस्यंमंत्रा । अवरुन्धे वशीकरोति ॥ ५२ ॥

तदेवाह सत्संगेति । यातुधानाः राक्षसाः ॥ ५३ ॥

त्वाष्ट्रो वृत्रः कायाधवः कयाधुपुत्रः प्रह्लादः ॥ ५४ ॥

ऋक्षो जांबमान् । गृध्रो जटायुः । वणिक्पथः तुलाधारः । व्याधो धर्म्मव्याधः । यज्ञपत्न्यो दीक्षितभार्याः ॥ ५५ ॥

तेषां साधनांतराभावमाह । तेनाधीतश्रुतिगणा इति । अनधीतः श्रुतिगणा यैः तदर्थं च न उपासिताः महत्तमा अध्यापकायैस्ते तथा । किंच । अव्रता ततपसः न व्रतानि येषां न तप्तानि तपांसि यैस्ते च ते च तथा सत्संगादिति । सद्भिः संगो नाम मैव । इति सत्संगादित्युक्तम् सत्संगस्तु तत्र तत्रांतर्दृष्ट्यानुसंधेयः ॥ ५६ ॥

ततो दुःसंगमुत्सृज्य सत्सु सज्जेत बुद्धिमान् ।
संत एवास्य छिंदन्ति मनोव्यासंगमुक्तिभिः ॥ ५७ ॥

( ११ । २६ । २६ श्रीकृष्णः )

एवं सत्संगमभिष्टूय प्रसंगादसत्संगं निन्दन्नुपसंहरति चतुर्भिः तत इत्यादिभिः । मनो व्यासंगं भक्तिप्रतिबंधिकां वासनां उक्तिभिः भक्तिमहिमाप्रतिपादकैर्वचनैः ॥ ५७ ॥

यद्यसद्भिः पथि पुनः शिश्नोदरकृतोद्यमैः ।
आस्थितो रमते जंतुस्तमो विशति पूर्ववत ॥ ५८ ॥

सत्यं शौचं दया मौनं बुद्धिः श्री ह्रींर्यशः क्षमा ।
शमो दमो भगश्चेति सत्संगाद्याति संक्षयम् ॥ ५९ ॥
तेष्वशांतेषु मूढेषु योषित्क्रीडामृगेषु च ।
संगन्न कुर्य्याच्छोच्येषु खंडितात्मस्वसाधुषु ॥ ६० ॥

( ३ । ३१ । ३२—३४ )

असद्भिः सह तेषां पथि आश्रितो विषयेषु रमते तमो विशति संसारं । सत्यादियुक्तोपि नासत्संगं कुर्यात् ॥ ५८ ॥

यतः सत्यमिति । भगो भाग्यम् । येषामसतां संगात् ॥ ५९ ॥

अशांतेषु क्रोधादिवशेषु योषित्क्रीडामृगेषु शोच्येषु पापबुद्धिषु । खंडितात्मसु देहाभिमानिषु सर्वं चैतत्प्रत्येकमसाधुलक्षणं तारतम्येन ज्ञेयम् ॥ ६० ॥

यथोपश्रयमाणस्य भगवन्तं विभावसुम् ।
शीतान्भयं* तमोप्येति साधून्संसेवतस्तथा ॥ ६१ ॥
निमज्जोन्मज्जतां घोरे भवाब्धौ परमायनम् ।
संतो ब्रह्मविदः शान्ता नौर्दृढेवाप्सु मज्जताम् ॥ ६२ ॥
अन्नं हि प्राणिनां प्राणः आर्तानां शरणं त्वहम् ।
धर्मो वित्तं नृणां प्रेत्य संतोऽर्वाग्बिभ्यतोऽरणम् ॥ ६३ ॥
सन्तो दिशन्ति चक्षूंपि बहिरर्कः समुत्थितः ।
देवता बान्धवाः सन्तः सन्त आत्माहमेव च ॥ ६४ ॥

( ११ । २६ । ३१—३४

एवं प्रसंगादसत्संगं निंदित्वा सतामुपदेशापेक्षापि तथा नास्ति केवलं तत्सन्निधिरेव तारयतीत्याह यथेति । विभावसुमग्निं सेवमानस्य अप्येति नश्यति तथा कर्मादिजाड्यं आगामिसंसारभयं तन्मूलमज्ञानं च भक्तिं प्राप्य नश्यतीत्यर्थः ॥ ६१ ॥

किं बहुना निमज्जोन्मज्जने संत एव दृढा नौरित्यत आह निमज्जोन्मज्जतामिति निमज्जोन्मज्जतां उच्चावचयोनीर्गच्छतां परमायनं परमाश्रयम् ॥ ६२ ॥

---

* शीतं भयमिति पाठान्तरम् ।

एवमुक्तं प्रकरणार्थं भगवद्वचनेनोपसंहरति द्वाभ्याम्। अन्नमिति। यथा अन्नमेव प्राणःजीवनं अहमेव यथाशरणं धर्मएव यथा प्रेत्य परलोके वित्तन्तथा संत एव अर्वाक्संसारे पतनाद्बिभ्यतः पुंसः अरणं शरणम् ॥ ६३ ॥

किं च सन्त इति। चक्षूंषि दुर्लभानि स्थूलसूक्ष्मभद्भक्तिकर्त्तव्यताज्ञानानि दिशंति उपदिशन्ति सन्तः। अर्कः पुनः सम्यगुत्थितोपि बहिः स्थूलघटादिज्ञानं जनयतीत्यर्थः। तस्मात्तत्सेवैव भगवद्भक्तिप्राप्तौ मूलं कारणमिति ॥ ६४ ॥

इति श्रीमत्पुरुषोत्तमचरणारविंदकृपामकरंदबिंदुप्रोन्मीलितविवेकतैरभुक्त परमहंस विष्णुपुरीग्रथितायां श्रीभागवतामृताब्धिलब्धश्रीभगवद्भक्तिरत्नावल्यां द्वितीयं विरचनम् ॥

---

## अथ तृतीयं विरचनम् ॥

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥ १ ॥

इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ।
क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥ २ ॥

(७।५।२३—२४ प्रह्लादः)

अथ भक्तेर्विशेषान् वक्तुं विवरणमारभते । तत्र नवविधानां भक्तीनां प्राधान्यमभिप्रेत्य ता एव दर्शयितुं प्रथमं प्रह्लादवचनमाह द्वाभ्याम् । श्रवणमिति । श्रवणं तन्नामादिशब्दानां परोक्षाणां वा श्रोत्रेण ग्रहणं । कीर्त्तनं तेषां स्वयं उच्चारणम् । स्मरणं तन्नामरूपादीनाम् मनसा चिन्तनम् । पादसेवनं परिचर्याप्रतिमादौ साधारणम् । अर्च्चनं पूजा जलादिषु वन्दनं दण्डवत्प्रणामादिसर्वाङ्गैरभिवादनं वा । दास्यं कर्मार्पणम् । सख्यं तद्विश्वासादि । आत्मनिवेदनं देहसमर्पणम् । यथा विक्रीतस्य गवाश्वादेर्भरणपालनादिचिंता न क्रियते तथा देहं तस्मै समर्प्य तच्चिंतावर्जनमिति ॥ १ ॥

इतिनवलक्षणानि यस्याः सा । अद्धा साक्षात्तेन चेत् भगवद्भक्तिः क्रियते सा* चार्पिता सती नतु कृता पश्चादर्प्यते तदुत्तममधीतं मन्ये नत्वसद्गुरोरधीतं शिक्षितं वा तथाविधं किंचिदस्तीति भावः ॥ २ ॥

स वै मनः कृष्णपदारविंदयोर्वचांसि वैकुंठगुणानुवर्णने ।
करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युत सत्कथोदये ॥ ३ ॥
मुकुंदलिंगालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गमम् ।
घ्राणं च तत्पादसरोजसौरभे श्रीमत्तुलस्या रसनां तदर्पिते ॥ ४ ॥
पादौ हरेः क्षेत्रपदानुसर्पणे शिरो हृषीकेशपदाभिवंदने ।
कामं च दास्ये नतु कामकाम्यया यथोत्तमश्लोकजनाश्रया मतिः ॥५॥

(९।४।१८—२० शुकः)

---

* अधीतेन चेत् भगवति भक्तिः क्रियेत सा चार्पितैव सती यदि क्रियेत नतु कृता सती पश्चादर्प्येत इति पाठान्तरम् ।

अत्र शिष्टाचारोप्येवमिति शुककवचनेनाह त्रिभिः । स वै मन इत्यादिभिः । श्रुतिः श्रोत्रं अच्युतस्य सत्कथानामुदये श्रवणे चकारेति सर्वत्रान्वयः ॥ ३ ॥

तथा मुकुंदेति । मुकुंदस्य लिंगानामालयानि स्थानानि तेषां दर्शनम् । दृशौ नेत्रे श्रीमत्तुलस्याः तत्पादरसांजनेन यत्सौरभं तस्मिन् । तदर्पिते तस्मै निवेदितान्नादौ ॥ ४ ॥

किं च* पादौ हरेरिति । कामं स्रक्चंदनादिसेवां च दास्ये निमित्ते तत्प्रसादस्वीकाराय न तु काम्यया विषयेच्छया । कथंचकार उत्तमश्लोकजनाश्रया मतिः यथा भवेत्तथा । अनेन तद्भक्तेषु परमभावं प्राप्त इति स्फुटीकृतम् ।

अत्र मंदिरमार्जनादिकं तस्योपेक्षानर्हत्वं प्रसंगादुक्तम् ॥ ५ ॥

श्रवणं कीर्तनं चास्य स्मरणं महतां यतेः ।
सेवेज्यावनतिर्दास्यं सख्यमात्मसमर्पणम् ॥ ६ ॥

( ७ । ११ । ११ नारदः )

श्रवणादिकमेव प्राधान्येन विवक्षितमित्यभिप्रेत्याह । श्रवणमिति । इज्या पूजा । एतत्सर्वं कर्तव्यमिति शेषः ॥ ६ ॥

श्रुतः संकीर्तितो ध्यातः पूजितश्चादृतोपि वा ।
नृणां धुनोति भगवान् हृत्स्थो जन्मायुताशुभम् ॥ ७ ॥

( १२ । ३ । ४६ शुकः )

एषां फलमाह श्रुत इति । अयुतपदमुपलक्षणं द्रष्टव्यं । वा शब्दात् श्रवणादीनां प्रत्येकं पापनाशे सामर्थ्यं दर्शितम् ॥ ७ ॥

शृण्वंति गायंति गृणंत्यभीक्ष्णशः स्मरंति नंदंति तवेहितं जनाः ।
तएव पश्यंत्यचिरेण तावकं भवप्रवाहोपरमं पदांबुजम् ॥ ८ ॥

( १ । ८ । ३६ कुन्ती )

एवं पापे नष्टे यद्भवति तदाह । शृण्वंतीति । ईहितं लीलां नंदंति अन्यैः कीर्त्यमानमभिनन्दन्ति ये जनाः तावकं त्वदीयं पदांबुजम् त एव पश्यन्त्येव अचिरेणैवेति च सर्वत्रावधारणम् । कीदृशं भवप्रवाहस्य उपरमो यस्मात् तत् ॥ ८ ॥

अहं हरे तव पादैकमूलदासानुदासो भवितास्मि भूयः ।
मनः स्मरेताऽसुपतेर्गुणानां गृणीत वाक् कर्म करोतु कायः ॥ ९ ॥

( ६ । ११ । २४ वृत्रः)

---

* तत्पादसरोजेनेति पाठान्तरम् ।

किंच श्रवणपराणां संसारोपि न दुःखायेति वृत्रवाक्येनाह । अहमिति । तव पादाचैवैकं मूलं आश्रयो येषां दासानां अनुदासो दासदासः भूयः पुनः पुनर्भवितास्मि भविष्यामि भवेयमिति प्रार्थना । असुपतेः प्राणनाथस्य तव गुणानां गुणान्मम मनः स्मरतु वागपि तानेव कीर्तयतु । कायस्त्वेव कर्म करोतु ॥ ९ ॥

अशेषसंक्लेशशमं विधत्ते गुणानुवादश्रवणं मुरारेः ।

कुतः पुनस्तच्चरणारविंदपरागसेवारतिरात्मलब्धा ॥ १० ॥

( ३ । ७ । १४ मैत्रेयः )

ननु सांसारिकं दुःखम् । तस्यापि संभाव्यत एव नेति कैमुतिकन्यायेनाह । अशेषेति । अशेषाणां ऐहिकामुष्मिकानां क्लेशानां शमं नाशं । आत्मनि लब्धा मनसि उत्पन्ना तत्सेवा रतिः क्लेशं हरतीति किं वक्तव्यम् ॥ १० ॥

नोत्तमश्लोकवार्तानां जुषतां तत्कथामृतम् ।

स्यात्संभ्रमोन्तकालेपि स्मरतां तत्पदांबुजम् ॥ ११ ॥

( १ । १८ । ४ सूतः )

अत्रापि कैमुतिकन्यायेनाह नोत्तमश्लोकेति । उत्तमश्लोकस्य वार्ता कीर्तनं येषां तेषां संभ्रमः भयं उद्वेगो वा अंतकाले मरणकालेपि न भवति किं पुनः स्वस्थतायाम् ॥ ११ ॥

मर्त्यस्तयाननुसवमेधितया मुकुंदश्रीमत्कथाश्रवणवर्णनचिंतयेति ।

तद्धाम दुस्त्यजकृतान्तजवापवर्गं ग्रामाद्वनं क्षितिभुजोपि ययुर्यदर्थाः ॥ १२ ॥

( १० । ९० । ५० शुकः )

एवं जीवन्मुक्तिपरममुक्ती फले अभिधाय फलांतरमप्याह । मर्त्य इति । श्रीमत्याः कथायाः श्रवणकीर्तनयुक्तया चिंतया वर्धितया अनुवृत्त्यानभिमुख्येन तस्य धाम लोकमेति लोकत्वेपि कालानाकलितत्वमित्याह दुस्त्यजेति । दुर्लभपुरुषार्थत्वमाह । ग्रामादिति ॥ १२ ॥

यानीह विश्वविलयोद्भववृत्तिहेतुकर्माण्यनंतविषयाणि हरिश्चकार ।

यस्त्वंग गायति शृणोत्यनुमोदते वा भक्तिर्भवेद्भगवति ह्यपवर्गमार्गे ॥ १३ ॥

( १० । ६९ । ४५ शुकः )

किंचास्तु श्रवणादिनदनुमोदनमपि तत्तुल्यमित्याह शुकवाक्येन । यानीहेति । वृत्तिः स्थितिःविलयादिहेतूनि कर्माणि । अनंतविषयाणि विचित्राणीत्यर्थः । अंग हे परीक्षित् तस्यैव भक्तिर्भवति अपवर्गस्य मार्गे प्रापके तस्मात्साधूक्तं न तेषां संसारदुःखमिति ॥ १३ ॥

कामं भवः स्ववृजिनैर्निरयेषु नः स्याच्चेतोऽलिवद्यदि नु ते पदयो रमेत ।

वाचस्तु नस्तुलसिवद्यदि तेंघ्रिशोभाः पूर्येत ते गुणगणैर्यदि कर्णरंध्रः ॥ १४ ॥

( ३ । १५ । ४९ कुमारः )

अत्र शिष्टाचारोप्येवमिति शुककवचनेनाह त्रिभिः। स वै मन इत्यादिभिः। श्रुतिः श्रोत्रं अच्युतस्य सत्कथानामुदये श्रवणे चकारेति सर्वत्रान्वयः ॥ ३ ॥

तथा मुकुंदेति। मुकुंदस्य लिंगानामालयानि स्थानानि तेषां दर्शनम्। दृशौ नेत्रे श्रीमत्तुलस्याः तत्पादरसांजनेन यत्सौरभं तस्मिन्। तदर्पिते तस्मै निवेदितान्नादौ ॥ ४ ॥

किंच* पादौ हरेरिति। कामं स्रक्चंदनादिसेवां च दास्ये निमित्ते तत्प्रसाद-स्वीकाराय न तु काम्यया विषयेच्छया। कथंचकार उत्तमश्लोकजनाश्रया मतिः यथा भवेत्तथा। अनेन तद्भक्तेषु परममार्च प्राप्त इति स्फुटीकृतम्।

अत्र मंदिरमार्जनादिकं तस्योपेक्षानर्हत्वं प्रसंगादुक्तम् ॥ ५ ॥

श्रवणं कीर्तनं चास्य स्मरणं महतां यतेः।
सेवेज्यावनतिर्दास्यं सख्यमात्मसमर्प्पणम् ॥ ६ ॥

( ७। ११। ११ नारदः )

श्रवणादिकमेव प्राधान्येन विवक्षितमित्यभिप्रेत्याह। श्रवणमिति। इज्या पूजा। एतत्सर्वं कर्तव्यमिति शेषः ॥ ६ ॥

श्रुतः संकीर्तितो ध्यातः पूजितश्चादृतोपि वा।
नृणां धुनोति भगवान् हृत्स्थो जन्मायुताशुभम् ॥ ७ ॥

( १२। ३। ४६ शुकः )

एषां फलमाह श्रुत इति। अयुतपदमुपलक्षणं द्रष्टव्यं। वा शब्दात् श्रवदीनां प्रत्येकं पापनाशे सामर्थ्यं दर्शितम् ॥ ७ ॥

शृण्वंति गायंति गृणंत्यभीक्ष्णशः स्मरंति नंदंति तवेहितं जनाः।
तएव पश्यंत्यचिरेण तावकं भवप्रवाहोपरमं पदांबुजम् ॥ ८ ॥

( १। ८। ३६ कुन्ती )

एवं पापे नष्टे यद्भवति तदाह। शृण्वंतीति। ईहितं लीलां नंदंति अन्यैः कीर्त्यमानमभिनन्दन्ति ये जनाः तावकं त्वदीयं पदांबुजम् त एव पश्यन्त्येव अचिरेणैवेति च सर्वत्रावधारणम्। कीदृशं भवप्रवाहस्य उपरमो यस्मात् तत् ॥ ८ ॥

अहं हरे तव पादैकमूलदासानुदासो भवितास्मि भूयः।
मनः स्मरेताऽसुपतेर्गुणानां गृणीत वाक् कर्म करोतु कायः ॥ ९ ॥

( ६। ११। २४ वृत्रः)

---

* तवपादसरोजेनेति पाठान्तरम्।

किंच श्रवणपराणां संसारोपि न दुःखायेति पृथुवाक्येनाह। अहमिति। तव पादावेवैकं मूलं आश्रयो येषां दासानां अनुदासो दासदासः भूयः पुनः पुनर्भवितास्मि भविष्यामि भवेयमिति प्रार्थना। असुपतेः प्राणनाथस्य तव गुणानां गुणान्मम मनः स्मरतु वागपि तानेव कीर्तयतु। कायस्त्वैव कर्म करोतु ॥ ९ ॥

अशेषसंक्लेशशमं विधत्ते गुणानुवादश्रवणं मुरारेः।

कुतः पुनस्तच्चरणारविंदपरागसेवारतिरात्मलब्धा ॥ १० ॥

( ३ । ७ । १४ मैत्रेयः )

ननु सांसारिकं दुःखम्। तस्यापि संभाव्यत एव नेति कैमुतिकन्यायेनाह। अशेषेति। अशेषाणां ऐहिकामुष्मिकानां क्लेशानां शमं नाशं। आत्मनि लब्धा मनसि उत्पन्ना तत्सेवा रतिः क्लेशं हरतीति किं वक्तव्यम् ॥ १० ॥

नोत्तमश्लोकवार्तानां जुषतां तत्कथामृतम्।

स्यात्संभ्रमोन्तकालेपि स्मरतां तत्पदांबुजम् ॥ ११ ॥

( १ । १८ । ४ सूतः )

अत्रापि कैमुतिकन्यायेनाह नोत्तमश्लोकेति। उत्तमश्लोकस्य वार्ता कीर्तनं येषां तेषां संभ्रमः भयं उद्वेगो वा अंतकाले मरणकालेपि न भवति किं पुनः स्वस्थतायाम् ॥ ११ ॥

मर्त्यस्तयाननुसवमेधि तया मुकुंदश्रीमत्कथाश्रवणवर्णनचिंतयेति।

तद्धाम दुस्त्यजकृतान्तजवापवर्गं ग्रामाद्वनं क्षितिभुजोपि ययुर्यदर्थाः ॥ १२ ॥

( १० । ९० । ५० शुकः )

एवं जीवन्मुक्तिपरममुक्ती फले अभिधाय फलांतरमप्याह। मर्त्य इति। श्रीमत्याः कथायाः श्रवणकीर्तनयुक्तया चिंतया वर्धितया अनुवृत्त्यानवच्छिन्नत्वेन तस्य धाम लोकमेति लोकत्वेपि कालानाकलितत्वमित्याह दुस्त्यजेति। दुर्लभपुरुषार्थत्वमाह। ग्रामादिति ॥ १२ ॥

यानीह विश्वविलयोद्भववृत्तिहेतुकर्माण्यनंतविषयाणि हरिश्चकार।

यस्त्वंग गायति शृणोत्यनुमोदते वा भक्तिर्भवेद्भगवति ह्यपवर्गमार्गे ॥ १३ ॥

( १० । ६९ । ४५ शुकः )

किंचास्तु श्रवणादिनदनुमोदनमपि तत्तुल्यमित्याह शुकवाक्येन। यानीहेति। वृत्तिः स्थितिःविलयादिहेतूनि कर्माणि। अनंतविषयाणि विचित्राणीत्यर्थः। अंग हे परीक्षित् तस्यैव भक्तिर्भवति अपवर्गस्य मार्गे प्रापके तस्मात्साधूक्तं न तेषां संसारदुःखमिति ॥ १३ ॥

कामं भवः स्ववृजिनैर्निरयेषु नः स्याच्चेतोऽलिवद्यदि नु ते पदयो रमेत।

वाचस्तुनस्तुलसिवद्यदि तेंघ्रिशोभाः पूर्येत ते गुणगणैर्यदि कर्णरंध्रः ॥ १४ ॥

( ३ । १५ । ४९ कुमाराः )

एवं श्रवणादिपराणां निरयादियातनापि नोद्वेगायेति। अतएव ज्ञानिभिरपि प्राथ्यमानत्वात् ज्ञानादिभ्योपि श्रवणादिकमुत्कृष्टमिति सनकादिवाक्येनाह काममिति। हे भगवन्नितः पूर्वमस्माकं वृजिनं नाभवत्। इदानीं सर्वाण्यपि जातानि। यतस्त्वद्भक्तौ शहो। अतस्तैः स्ववृजिनैः निरयतुल्येषु शूकरादिषु नरकेष्वेव वा कामं नोऽस्माकं भवो जन्म स्यात्। न्विति वितर्के यदि तु न चेतस्ते पदयो रमेत। अलिर्यथा कंटकैराविध्यमानोपि पुष्पेषु रमते तद्वद्विघ्नानविगणय्य यदि रमेत अंघ्रिभ्यां शोभा यासां यथा च तुलसी स्वगुणनैरपेक्ष्येण त्वदंघ्रिसंबंधेनैव शोभते तथा यदि नो वाचः शोभेरन् यदि च ते गुणगणैः पूर्य्येन कर्णरंध्र इत्यल्पस्य पूरणमिव याचकरीत्या प्रार्थयंते। अयं गूढोभिप्रायः कर्णरंध्रस्याकाशत्वात् गुणगणानां च अमूर्तत्वान्न कदाचित् पूरणम् अतो नित्यमेव श्रवणं फलिष्यतीति॥१४॥

मनसो वृत्तयो नः स्युः कृष्णपादाम्बुजाश्रयाः।
वाचोभिधायिनीर्नाम्नां कायस्तत्प्रह्वनादिषु॥ १५॥

(१०। ४७। ६६ नन्दादयः)

अतएव विज्ञैः श्रवणादिकमेव प्रार्थ्यत इति नंदस्य वचनेनाह। मनस इति। नाम्नां अभिध्यायिनीः अभिध्यायिन्यः तत्पराः॥ १५॥

गृणतां शृण्वतां वीर्याण्युद्दामानि हरेर्मुहुः।
यथा सुजातया भक्त्या शुद्ध्येन्नात्मा व्रतादिभिः॥ १६॥

(६। ३। ३२ यमः)

नन्वेवमपि भगवान् हृत्स्थो जन्मायुताशुभं धुनोतु तथापि न श्रवणादीनामसाधारणम्। व्रतादिनापि शुद्धिश्रवणान्नेत्याह। गृणतामिति। सुजातया शुद्धया भक्त्या कीर्तनादिरूपयैव यथा आत्मा मनः शुद्ध्यति तथा व्रतादिना न॥ १६॥

यथा यथात्मा परिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः।
तथा तथा पश्यति वस्तुसूक्ष्मं चक्षुर्यथैवांजनसंप्रयुक्तम्॥ १७॥

(११। १४। २८ श्री कृष्णः)

मनः शुद्धिफलमाह भगवद्वाक्येन। यथायथेति। आत्मा चित्तं परिमृज्यते शोध्यते वस्तुमत् स्वरूपं दिव्यांजनेन संप्रयुक्तं चक्षुः यथा सूक्ष्मं त्रसरेण्वादि पश्यति॥ १७॥

शृण्वतः श्रद्धया नित्यं गृणतश्च विचेष्टितम्।
कालेन नातिदीर्घेण भगवान् विशते हृदि॥ १८॥

(२। ८। ४ परीक्षित्)

यथा यथा तथा तथेत्येवं फलाव्यभिचारं वदता सद्यः फलत्वमुक्तं स्पष्टयति परीक्षिद् वचनेन शृण्वत इति। नातिदीर्घेण स्वल्पेन। विशते प्रकाशत इत्यर्थः। एवंचोपायान्तरेभ्योऽप्येषामुत्कर्षो ॥ १८ ॥

संकीर्त्यमानो भगवाननंतः श्रुतानुभावो व्यसनं हि पुंसाम् ।
प्रविश्य चित्तं विधुनोत्यशेषं यथा तमोर्कोऽभ्रमिवातिवातः ॥१६॥

( १२ । १२ । ४८ सूतः )

एतत्फलमाह संकीर्त्यमान इति सूतः शौनकं प्रति द्वादशे इत्यर्थः। चित्तं प्रविश्य अशेषं व्यसनं दुःखं तदपि सवासनं धुनोति नाशयति यथोदितोर्कः तमोंधकारं इति प्रकाशसन्निधिमात्रे दृष्टांतः व्यापारे तु अतिवातः प्रबलो वायुः अभ्रं मेघमिवेति ॥१९॥

तस्माद्भारत सर्वात्मा भगवान् हरिरीश्वरः ।
श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताभयम् ॥ २० ॥

( २ । १ । ५ शुकः )

अन्यथा तु व्यसनशान्तिर्नास्तीत्याशयेन पुरुषार्थान्तरे हेतुत्वमप्येषां शुकवाक्येनाह भारतेति हे भारत परीक्षित् अभयं सर्वतो व्यसनशान्तिं इच्छता पुरुषेण ॥ २० ॥

या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद्भवज्जनकथाश्रवणेन वा स्यात् ।
सा ब्रह्मणि स्वमहिमन्यपि नाथमाभूत् किंत्वन्तकासिलुलितात्पततां विमानात् ॥२१॥

( ४ । ९ । १० ध्रुवः )

वस्तुतस्तु मोक्षादपि श्रवणसुखं गरीय इति स्वतः पुरुषार्थत्वमेवैषां युक्तमिति। निर्वृतिः सुखं। भवज्जनैः कथ्यमानायास्तत् कथायाः। श्रवणेन। स्वमहिमनि स्वरूपभूते ब्रह्मणि मोक्षावस्थायामपीत्यर्थः। सा निर्वृतिर्माभूत् न भवति यदि तदा अन्तकः काल एवासिः खड्गस्तेन लुलितात् उपद्रुतात् विमानात् स्वर्गादेः पततां जनानां तत्सुखं न भवतीति किं वाच्यमिति ॥ २१ ॥

शृण्वन्सुभद्राणि रथांगपाणेर्जन्मानि कर्माणि च यानि लोके ।
गीतानि नामानि तदर्थकानि गायन् विलज्जोविचरेदसंगः ॥ २२ ॥

( ११ । २ । ३९ कविः ) –

अतएवात्र लज्जादिकं न कर्तव्यमित्याह शृण्वन्निति। सुभद्राणि यशांसि जन्मादीनि वा सुभद्राण्युत्कृष्टानि तदर्थकानि जन्मादिविषयानि गीतानि नामानि तदर्थकानि जन्माद्यनुरुद्धानि वासुदेवकंसारीत्यादीनि गायन् शृण्वंश्च विचरेत् व्यवहरेत् यथासुखं तिष्ठेदित्यर्थ। स च विलज्जोऽसंगः अभयश्च सन्नित्यादि द्रष्टव्यम् ॥ २२ ॥

न यत्र श्रवणादीनि रक्षोघ्नानि स्वकर्मसु ।
कुर्वन्ति सात्वतां भर्तुर्यातुधानश्च तत्राहि ॥२३॥

( १० । ६ । ३ शुकः )

व्यतिरेके निंदामाह न यत्रेति यत्र-गृहे सात्वतां भर्त्तुः श्रवणादीनि न संति तत्र यातुधान्यः राक्षस्यः चकारादन्येपि विघ्नहेतवः स्वकर्मसु कुर्वन्ति प्रभवंतीत्यर्थः ॥ २३ ॥

जिह्वा न वक्ति भगवद्गुणनामधेयं चेतश्च न स्मरति तच्चरणारविंदम् ।
कृष्णाय नो नमति यच्छिर एकदापि तानानयध्वमसतोऽकृतविष्णु-कृत्यान् ॥२४॥

( ६ । ३ । २९ यमः )

एवं च न केवलमेतन्मात्रं किन्तु परलोकेपि भयमिति यमवचनेनाह । जिह्वेति । येषां जिह्वा येषां मनः येषां शिरश्च एकदापीति सर्वत्रान्वेति अकृतानि विष्णुकृत्यानि पूजादीनि यैस्तानानयध्वं नरकायेति शेषः । कीर्तनादिपरास्तु न द्रष्टव्या इति भावः ॥२४॥

विलेबतोरुक्रमविक्रमान् ये न शृण्वतः कर्णपुटे नरस्य ।
जिह्वा सती दार्दुरिकेव सूत न चोपगायत्युरुगायगाथाः ॥२५॥
भारः परं पट्टकिरीटजुष्टमप्युत्तमांगं न नमेन्मुकुंदम् ।
शावौ करौ नो कुरुतः सपर्यां हरेर्लसत्कांचनकंकणौ वा ॥२६॥
बर्हायिते ते नयने नराणां लिंगानि विष्णोर्न निरीक्षितो ये ।
पादौ नृणां तौ द्रुमजन्मभाजौ क्षेत्राणि नानुव्रजतो हरेर्यौ ॥२७॥
जीवन् शवो भागवतांघ्रिरेणुं न जातु मर्त्योऽभिलभेत यस्तु ।
श्रीविष्णुपद्यामनुजस्तुलस्याः श्वसन् शवो यस्तु न वेद गन्धम् ॥२८॥

( २ । ३ । २०—२३ शौनकः )

किं च श्रवणादिविमुखस्य देहेंद्रियादिसर्वं व्यर्थमित्याह शौनकवाक्येन चतुर्भिः । विलेबतेति । यतेति खेदे न शृण्वतः अशृण्वतः नरस्य कर्णपुटे ते विले वृथारंध्रे न चेदुपगायति तस्य जिह्वा असती दुष्टा दर्दुरो भेकः तज्जिह्वेव । यद्वा स्वार्थेऽण् दार्दुरिका भेकीवेत्यर्थः । यद्वा हृषीकेशं न वदतीति असती व्यभिचारिणी । उरुभिर्गीयत इत्युरुगायो भगवान् तस्य गाथालौकिक्यपि वार्ता ॥ २५ ॥

किं च भारः परमिति । पट्टवस्त्रोष्णीषेण किरीटेन जुष्टमपि शिरः उत्तमांगं यदि मुकुंदं न नमेत् तर्हि केवलं भार एव । शावौ मृतकस्तत्करतुल्यौ । लसंती कांचनकंकणौ ययोः वा शब्दोऽप्यर्थे ॥ २६ ॥

किं च वर्हायितेति । ये नयने विष्णोर्लिंगानि श्रीजगन्नाथादिमूर्तीर्न्न निरीक्षतः न निरीक्षते ते वर्हायिते मयूरपिच्छतुल्ये । तौ पादौ द्रुमवज्जन्म भजेत इति तथा वृक्षमूलतुल्या-वित्यर्थः अतएव शरीरकांडस्य वृक्षत्वारोपणेन अवस्तुधिया काष्ठमयत्वं दर्शितम् ॥२७॥

किंच जीवन् शवेति । नाभिलभेत अभितानस्पृशेत् न धारयेत् श्रीविष्णुपदलग्नायाः तुलस्या मनुजो मनुष्यः गन्धं न वेद न जिघ्रति प्रसंगाच्चावघ्राय नाभिनंदेदित्यर्थः । न केवलमेतानि व्यर्थानि किंतु असद्विषयत्वात् प्रतिकूलान्यपीति भावः॥ २८ ॥

सा वाग्यया तस्य गुणान् गृणीते करौ च तत्कर्मकरौ मनश्च ।

स्मरेद्वसंतं स्थिरजंगमेषु शृणोति तत्पुण्यकथाः स कर्णः ॥ २९ ॥

शिरस्तु तस्योभयलिंगमानमेत्तदेव यत्पश्यति तद्धि चक्षुः ।

अंगानि विष्णो रथतज्जनानां पादोदकं यानि भजन्ति नित्यम् ॥३०॥

विष्णोः - अथ

( १० । ८० । ३—४ परीक्षित् )

कथं तर्हि सार्थकानीत्याह । सावाग्ययेति । या वाक् तस्य कृष्णस्य गुणान् गृणीते यौ तत्कर्मकरौ तौ करौ सार्थकाविति सर्वत्र बोद्धव्यम् । यन्मनः स्थिरजंगमेषु वसंतं स्मरेत् तन्मनः । यस्तस्य पुण्यकथाः शृणोति स कर्ण इति ॥ २९ ॥

अपि च शिर इति यत्तु शिरः उभयलिंगं भक्तरूपं प्रतिमादिरूपं च आ नमेत्तदेव उभयलिंगं यत् पश्यति तदेव चक्षुर्यानि अंगानि विष्णोः पादोदकं अथवा तज्जनानां पादो-दकं नित्यमेव भजंति ॥ ३० ॥

एकान्तलाभ वचसोनुपुंसां सुश्लोकमौलेर्गुणवादमाहुः ।

श्रुतेश्च विद्वद्भिरुपाकृतायां कथासुधायामभिसंप्रयोगम् ॥ ३१ ॥

( ३ । ६ । ३३ मैत्रेयः )

किं च एकान्तलाभमिति । सुश्लोकमौलेः पुण्ययशसः शिरोभूतस्य मुकुटभूतस्य वा गुणवादं गुणादिकीर्तनं च सः एकान्तलाभं परमं लाभमाहुस्तस्य कथासुधायामभि-संप्रयोगं विनियोगं श्रुतेश्च लाभमाहुः । उपाकृतायां कथ्यमानायाम् ॥ ३१ ॥

तस्माद् गोविन्दमाहात्म्यमानंदरससुंदरम् ।

शृणुयात्कीर्तयेन्नित्यं स कृतार्थो न संशयः ॥ ३२ ॥

( हरिभक्तिसुधोदये ८ । ६ नारदः )

इति श्रीमत्पुरुषोत्तमचरणारविन्दकृपामकरन्दप्रोन्मीलितविवेकतैरभुक्तपरमहंसविष्णुपुरी-ग्रथितायां श्रीभागवतामृताब्धिलब्धश्रीभगवद्भक्तरत्नावल्यां तृतीयं विरचनम् ॥

एवं प्रकरणार्थमुपसंहरति । तस्मादिति । आनंदरसत्वात् सुंदरम् । शृणुयात्कीर्तये-दिति विधिः । यस्तु कीर्तयेच्छृणोति स कृतार्थ इत्यत्र न संशयो-स्तीति ॥ ३२ ॥

इति टीकायां तृतीयं विरचनम् ।

## अथ चतुर्थं विरचनम् ।

शृण्वतां स्वकथां कृष्णः पुण्यश्रवणकीर्तनः ।
हृद्यन्तस्थो ह्यभद्राणि विधुनोति सुहृत्सताम् ॥ १ ॥

(१।२।१७ सूतः)

अथ श्रवणं कीर्तनमित्युपदेशक्रमानुसारेणैकैकशो भक्तिनिरूपणाय विरचनमारभते तत्र दुर्वासनामूल एव सर्वोऽप्यनर्थः । सा च कृष्णकथाश्रवणेनैव निवर्तत इत्यभिप्रेत्याह । शृण्वतामिति । शृण्वतां जनानां । स्वस्य कृष्णस्यैव कथां वार्त्ताम् । पुण्ये श्रवणकीर्तने यस्य स श्रीकृष्णो हृदि स्थितानि अभद्राणि दुर्वासनारूपाणि विधुनोति नाशयति । यतः अंतस्थः सतां भक्तानां सुहृत् हितकारीत्यन्वयः ॥ १ ॥

पिबंति ये भगवत आत्मनः सतां कथामृतं श्रवणपुटेषु संभृतम् ।
पुनंति ते विषयविदूषिताशयं व्रजन्ति तच्चरणसरोरुहान्तिकम् ॥२॥

(२।२।३७ शुकः)

अभद्रनाशफलमाह । पिबंतीति । सतां आत्मनः आत्मत्वेन प्रकाशमानस्य यद्वा आत्मनः सर्वस्वरूपस्य सतो मुखात् कथामेवामृतं ये पिबंति ते विषयैर्दूषितं तद्वासनामलिनीकृतं आशयं मनः पुनंति शोधयंति । ततस्तस्य चरणपद्मान्तिकं विष्णुपदं व्रजंति ॥ २ ॥

धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः ।
नोत्पादयेद्यदि रतिं श्रम एव हि केवलम् ॥ ३ ॥

(१।२।८ सूतः)

ननु स्वधर्मेणापि एतत्साध्यते किं कथाभिः सत्यं तदप्येतद्द्वारैव इत्याह । यो धर्म इति प्रसिद्धः स यदि विष्वक्सेनकथासु रतिं नोत्पादयेत् तर्हि स्वनुष्ठितोपि सन् श्रमो ज्ञेयः । ननु मोक्षार्थस्यापि धर्मस्य श्रमत्वमस्त्येवेति सोप्यश्लाघ्यः स्यात् इत्यतोवधारयति केवलं श्रमः । अयमर्थः भगवत्कथारतिद्वारा मोक्षफलपर्यवसायित्वात् स्वधर्मो न श्रमः अयं तु न तथेति केवलं श्रमः । ननु तथापि स्वर्गादिसाधनधर्माणां सफलत्वं स्यात् इत्याशंक्य एवकारः क्षयिष्णुधर्मत्वान्न तत्फलमित्यर्थः । ननु क्वाप्यक्षय्यं स्वर्गादि न उत्पादयत्येव त्वात् हि शब्देन साधयति ॥ ३ ॥

ज्ञाने प्रयासमुदपास्य नमन्त एव जीवंति सन्मुखरितां भवदीयवार्ताम् ।
ध्याने स्थिताः श्रुतिगतां तनुवाङ्मनोभिर्ये प्रायशोऽजित जितोप्यसितैस्त्रिलोक्याम् ॥४॥ ध्याने स्थिता अपि ये ज्ञाने प्रयासं उदपास्य ભવદીયવાર્તાં તનુવાઙ્મનોભિ: નમન્તા તે ... મુખરિતાં ... (ત્રણે લોકોમાં અજિત) ...

( १० । १४ । ३ ब्रह्मा )

अतएव उत्पन्न भगवत्कथारतिना पुंसा ससाधनेपि ज्ञाने प्रयत्नमुत्सृज्य कथैव भगवद्वशीकरणं श्रोतव्येति ब्रह्मवाक्येनाह । ज्ञान इति । उदपास्य ईषदप्यकृत्वा सन्मुखरितां सद्भिः क्रियमाणां भवदीयवार्तां श्रुतौ कर्णे गतां प्राप्तां नमंतः सत्कुर्वन्तः जीवंति त्वत्कथाश्रवणमेव जीवनं येषामित्यर्थः। यद्वा श्रुतिगतां वेदप्रसिद्धमाहात्म्यां सन्मुखरितां संतो मौनशीला अपि मुखरिता वाचालीः कृता यया तामित्यर्थः । कथं नमंति स्थाने स्थिताः तीर्थादिभ्रमणक्लेशरहिताः । यद्वा स्थानेषु काशीप्रयागादिषु स्थिताः । ततः सत्संगमः । यद्वा स्वस्वधर्मेस्थिता अपि । हे अजित त्रिलोक्यामजित स्वतंत्रोपि तैर्जितोसि वशीकृतोसि । प्रायशः सर्वात्मना ॥ ४ ॥

नात्यंतिकं विगणयंत्यपि ते प्रसादं किं त्वन्यदर्पितभयं भ्रुव उन्नयैस्ते ।
येऽङ्ग त्वदंघ्रिशरणा भवतः कथायाः कीर्तन्यतीर्थयशसः कुशला रसज्ञाः॥५॥

( ३ । १५ । ४८ कुमाराः )

ननु सद्यो मोक्षफले ज्ञानेपि किमिति प्रयासत्यागः मोक्षादपि श्रवणसुखमधिकमित्याह । सनकादिवाक्येन नात्यंतिकमिति । आत्यंतिकं मोक्षमपि तव प्रसादं न गणयंति नाद्रियंते । किमु अन्यदिंद्रादिपदं । ते भ्रुव उन्नयैः उज्जृंभणैः अर्पितं भयं यस्मिन् तत् हे अंग भगवन् ये भवतः कथायां रसज्ञाः रसं जानन्ति त एव कुशलाः । कथंभूतस्य भवतः रमणीयत्वेन पावनत्वेन च कीर्तन्यं कीर्तनार्हं तीर्थं यशो यस्य ॥ ५ ॥

को वा भगवतस्तस्य पुण्यश्लोकेड्यकर्मणः ।
शुद्धिकामो न शृणुयाद्यशः कलिमलापहम् ॥ ६ ॥

( १ । १ । १६ ऋषयः )

किं च सर्वपापप्रायश्चित्तमपि भगवत्कथाश्रवणमेवत्याह को भगवत इति । पुण्यश्लोकैरीड्यानि कर्माणि यस्य तस्य यशः सर्वात्मना सर्वपापशुद्धिकामो न शृणुयात्को वा कतमो नात्मनेहितः नात्मनीन इत्यर्थः ॥ ६ ॥

प्रविष्टः कर्णरंध्रेण स्वानां भावसरोरुहम् ।
धुनोति शमलं कृष्णः सलिलस्य यथा शरत् ॥ ७ ॥

( २ । ८ । ५ परीक्षित् )

एतदेव दृष्टांतेन स्पष्टयति। भावसरोरुहं हृदयकमलं कर्णरंध्रेण प्रविष्टः श्रुत इत्यर्थः। शमलं हृद्गतं सर्वं मलं धुनोति। सलिलस्येति। द्रव्यान्तरमिश्रणादिना कुंभस्थजले शोधितेपि तदेव केवलं शुध्यति। न तु नदीतडागादिगतं। स च मलः कुंभस्यान्तस्तिष्ठत्येव नतु सर्वथा विलीयते। अतएव किंचिच्चलने पुनः क्षुभ्यति च। एवं तपोदानादिप्रायश्चित्तमपि न सर्वथा सर्वेषां पापं धुनोति। किंतु सावशेषं। तच्च कस्यचिदेव हृदि प्रविष्टमात्रस्तु श्रीकृष्णः सर्वेषां सर्वपापं निरवशेषं हरतीति अनेन दृष्टान्तेनोक्तं सलिलस्य मलं यथा शरदिति ॥ ७ ॥

शुद्धिर्नृणां नतु तथेड्यदुराशयानां विद्याश्रुताध्ययनदानतपःक्रियाभिः।
सत्वात्मनामृषभ ते यशसि प्रवृद्धसच्छ्रद्धया श्रवणसंभृतया यथा स्यात् ॥ ८ ॥

( ११ । ६ । ९ देवाः )

एतदेव दृष्टान्ततात्पर्यं स्पष्टयति देववाक्येन । शुद्धिरिति । हे ईड्य हे ऋषभ दुराशयानां रागिणां विद्याउपासना विद्यादिभिस्तथा शुद्धिर्न भवति । यथा सत्वात्मनां सतां ते तव यशसि श्रवणेन संभृतया परिपुष्टया अभिवृद्धया सच्छ्रद्धया यथा स्यात्। तस्माद्युक्तमुक्तं को वा न शृणुयादिति ॥ ८ ॥

निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनोभिरामात्।
क उत्तमः श्लोकगुणानुवादात्पुमान्विरज्येत विना पशुघ्नात् ॥ ९ ॥

( १० । १ । ४ परीक्षित् )

नन्वेवमपि शुद्धिकामः शृणोतु। न तु जीवन्मुक्तः कृतार्थत्वात्। न च बंधनान्मुमुक्षुर्योगादिपरत्वादेव न च रागी विषयासंगित्वात्तत्राह । निवृत्ततर्षैरिति विगततृष्णैर्जीवन्मुक्तैरपि उपगीयमानात् एवं मुक्तश्लाघ्यत्वमुक्तम्। मुमुक्षुश्लाघ्यत्वमाह। भवस्य संसारस्य व्याधेः औषधात् निवर्तकत्वात्। एवं रागिश्लाघ्यत्वमाह । श्रोत्रे विचित्रत्वात् मनसि रसवत्वात् अभिरामात् उत्तम श्लोकस्य गुणानां अनुवादात् कथातः को विरज्येत कस्तत्कथामृतं न शृणुयादित्यर्थः। पशुघ्नात् चांडालात् विना तथा ये विरज्यंते ते चांडाला एव ज्ञेया इति भावः। यद्वा। अपगता शुक् यस्मात् स अपशुक् वस्तुतो निःशोक आत्मा तं हंतीति संसारे पातयतीति यस्तस्मात्स आत्महेति भावः। यद्वा। अपशुक् परमात्मा तं हन्ति विष्णुद्रोहीत्यर्थः। यद्वा। अपशुच ऋषयः तान् हंति राक्षस इति। यद्वा नाकाकारप्रश्लेषः। तथा च पशुघ्नात् यज्ञपुरुषमनाराध्य स्वर्गाद्यर्थं यज्ञे पशून् हन्ति यस्तस्मात् वृथा वधभागिनो विना अन्येप्यश्रोतारः वधभागिन इति भावः। यद्वा पशवो हन्यन्तेऽनेनेति पशुहा तद् लोष्टदंडादिः तस्मात् स लोष्टादिवत् पुरुषार्थशून्य इतिभावः ॥ ९ ॥

को नाम तृप्येद्रसवित् कथायां महत्तमैकान्तपरायणस्य।
नान्तं गुणानामगुणस्य जग्मुर्योगेश्वरा ये भवपाद्ममुख्याः ॥ १० ॥

( १ । १८ । १४ ऋषयः )

ननु मुमुक्षुरागिणो श्रृणुताम्नाम जीवन्मुक्तस्य तृप्तत्वात् किंकथया न रसातिशयत्वात् जीवन्मुक्तस्यापि तत्कथाश्रवणतृप्तिमाह को नाम तृप्येदिति । रसवित् रसज्ञः महत्समानां एकान्तेन परं अयनमाश्रयो यस्तस्य कथायां । अगुणस्य प्राकृतगुणरहितस्य गुणानां कल्याणगुणानामन्तं ये योगेश्वरास्तेपि न जग्मुः । एतावंत इति न परिगणयांचक्रुः । भवः शिवः पाद्मो ब्रह्मा मुख्यो येषान्ते ॥ १० ॥

ज्ञानं यदा प्रतिनिवृत्तगुणोर्मिचक्रमात्मप्रसाद उभयत्र* गुणेष्वसंगः ।
कैवल्यसंमतपथस्त्वथ भक्तियोगः को निर्वृतो हरिकथासु रतिं न कुर्यात् ॥ ११ ॥

( २ । ३ । १२ शुकः )

एवं अन्यानपि श्रवणगुणान् दर्शयन् उक्तमर्थं स्पष्टयति । ज्ञानमिति । यत्र यासु कथासु ज्ञानं भवति । कीदृशं । आ सर्वतः सुषुप्त्यादि वैलक्षण्ये न प्रतिनिवृत्तं उपरतं गुणोर्मीणां रागादीनां चक्रं समूहो यस्मात्तत्तद्धेतुरात्मप्रसादश्च यत्र यासु । मनः प्रसादहेतुः गुणेषु विषयेष्वसंगो वैराग्यं च । उभयत्रेति पाठे इहामुत्र च गुणेष्वसंग इत्यर्थः । कैवल्यमित्येव संमतः पंथा यो भक्तियोगः । एते भक्तियोगाद्या यतो भवन्तीत्यर्थः । निर्वृतः श्रवणसुखेन अनिर्वृतो वा संसारतापेन तासु हरिकथासु रतिं न कुर्य्यात् ॥ ११ ॥

आयुर्हरति वै पुंसामुद्यन्नस्तं च यन्नसौ ।
तस्यर्ते यत् क्षणो नीत उत्तमश्लोकवार्तया ॥ १२ ॥
तरवः किं न जीवन्ति भस्त्राः किन्नश्वसंत्युत ।
न खादन्ति न मेहन्ति किं ग्रामपशवोऽपरे ॥ १३ ॥
श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः ।
न यत्कर्णपथोपेतो यातु नाम गदाग्रजः ॥ १४ ॥

( २ । ३ । १७—१९ शौनकः )

व्यतिरेके निंदामाह । आयुरिति । असौ सूर्यः उद्यन् उद्गच्छन् अस्तं च यन् गच्छन् यत् येन उत्तमश्लोकवार्तया श्रूयमाणया क्षणो नीतस्तस्य आयुः ऋते वर्जयित्वा वृथैव पुंसामायुर्हरति । यद्वा यः क्षण इति पाठे । तस्य ऋते तं क्षणं विनाऽवशिष्टमायुर्हरतीत्यर्थः ॥ १२ ॥

ननु जीवनादिकं एतेषां श्रवणादिविमुखानां आयुः फलमस्ति तत्राह । तरव इति । ननु तेषां श्वासो नास्ति भस्त्राश्चर्मकोशाः । ननु तासामाहारादिकं नास्ति तत्राह । नखादन्ति न मेहन्ति मेहनं रेतः सेकः मैथुनं न कुर्वन्ति । किं । यथा तर्वादयः तथा अपरेऽश्रोतारः पशव इति भावः ॥ १३ ॥

---

* उत यत्र इति पाठान्तरम् ॥

तदेवाह । श्वविट्वराहेति । श्वादिभिः संस्तुतः सदृशो निरूपितः । यस्य कर्णपथं श्रीकृष्णः कदापि न गतः अवज्ञास्पदत्वात् श्वभिः कश्मलविषयासक्तत्वात् विड्वराहैर्ग्रामशूकरैः कंटकवद्दुःखदविषयासक्तत्वात् उष्ट्रैः । भारवाहित्वात् खरैस्तुल्य इत्यर्थः वस्तुतस्तु अधिकारित्वाद्धरिभक्तिनः च्युत इति तेभ्योऽप्यधम इति भावः ॥ १४ ॥

तान् शोच्यशोच्यानविदोनुशोचे हरेः कथायां विमुखानघेन ।
क्षिणोति देवो निमिषस्तु तेषामायुर्वृथावादगतिस्मृतीनाम् ॥ १५ ॥
( ३ । ५ । १४ विदुरः )

तस्मात्कथाविमुखाः शोच्यादपि शोच्यतमा इति विदुरवचनेनाह । तान् शोच्येति । ये हरेः कथायां विमुखाः न रमन्ते तान् शोच्यान् एतेषामपि शोच्यानहमनुशोचे । कथंभूतान् अविदः सर्वशास्त्राभिप्रायानभिज्ञान् । येपि ज्ञात्वाऽघेन दुरदृष्टेन विमुखास्तानपि । कथं यो निमिषः कालो देवः सर्वेषामायुः क्षिणोति । अत्र हेतुः वृथैव वाग्गतिस्मृतयो वाग्देहमनोव्यापारा येषाम् ॥ १५ ॥

यन्न व्रजंत्यघभिदो रचनानुवादाच्छृण्वंति येऽन्यविषयाः कुकथा मतिघ्नीः ।
यास्तु श्रुताहतभगैर्नृभिरात्तसारास्तांस्तान् क्षिपंत्यशरणेषु तमःसु हंत ॥ १६ ॥
( ३ । १५ । २२ ब्रह्मा )

न केवलं तेषां वृथायुः हानिः अधोगतिश्चेत्याह । यन्न व्रजन्तीति । ये कुकथाः शृण्वंति । कास्ताः अघं भिनत्तीति अघभित्तस्य हरेः रचनासृष्ट्यादिलीला तस्या अनुवादादन्यविषयाः कामादिवार्ता मतिघ्नीः प्रतिभ्रंशिका यास्ते यत्प्रसिद्धं वैकुंठं न व्रजंति तेषामव्रजने हेतुः । यास्तु हतभगैः नरैः श्रुताः सत्यः तान् श्रोतॄन् अशरणेषु निराश्रयेषु तमस्सु नरकेषु क्षिपंति । हंत खेदे । कथंभूता आत्तसारः अर्थो नृणां पुण्यं याभिस्ताः । अतो भगवल्लीलाश्रोतारो वैकुंठं व्रजन्तीति भावः ॥ १६ ॥

पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये ।
वैराग्यसारं प्रतिलभ्य बोधं यथांजसान्वीयुरकुंठधिष्ण्यम् ॥ १७ ॥
( ३ । ५ । ४४ देवाः )

एवमश्रोतॄन् निंदित्वा तमेव भावं स्पष्टयति । वचनेन पानेन । देवा वैराग्यं सारो बलं यस्य बोधस्य तं यथावत् लब्ध्वा अन्वीयुः प्राप्नुयुः अकुंठधिष्ण्यम् वैकुंठं अंजसा सुखेन ॥ १७ ॥

ये तु त्वदीयचरणाम्बुजकोशगंधं जिघ्रंति कर्णविवरैः श्रुतिवातनीतम् ।
भक्त्या गृहीतचरणः परया च तेषां नापैषि नाथ हृदयाम्बुरुहात् स्वपुंसाम् ॥ १८ ॥
( ३ । ९ । ५ ब्रह्मा । )

किं च तेषां नित्यं भगवत्सान्निध्यादत्रापि वैकुंठसुखमिति ब्रह्मवाक्येनाह । ये तु त्वदीयेति। त्वदीयो चरणावेव अंबुजकोशौ तयोर्गन्धं यशः ये कर्णविवरैः जिघ्रन्ति शृण्वन्तीत्यर्थः श्रुतिर्वेदः श्रूयते इति श्रुतिः शब्दसामान्यं वास एव वातः तेन नीतं प्रापितं नापैषि नापयासि । ये त्वत्कथाश्रवणं अत्यादरेण कुर्वति तेषां हृदि नित्यं प्रकाशस इत्यर्थः । तथा च किं तेषामपेक्षितमिति भावः ॥ १८ ॥

अयं त्वत्कथामृष्टपीयूषनद्यां मनो वारणः क्लेशदावाग्निदग्धः ।
तृषार्तोवगाढो न सस्मार दावं न निःक्रामति ब्रह्म संपन्नवन्नः ॥ १९ ॥
( ४ । १ । ३२ सिद्धाः )

एतदेव श्रोतॄन् कृतार्थयन् सिद्धानामनुभवेनाह । अयन्त्विति । अयं मनो रूपो वारणः महामदोन्मत्तो गजः त्वत्कथैव मृष्टं शुद्धं अमृतं तन्मयी या नदी तस्यां अवगाढः प्रविष्टो दावाग्नितुल्यं संसारतापं न स्मरति स्म न च ततो न निर्गच्छति ब्रह्मसंपन्नवत् ब्रह्मैक्यं प्राप्त इव । यथा ब्रह्मणो न पृथक् भवति तथा नो मनोपि त्वत्कथाश्रवणपरमानन्दमग्नं श्रोतुं ब्रह्मैक्यं प्राप्तो न विरमतीत्यर्थः । एतेन मुक्तितुल्यं श्रवणसुखमित्यपि दर्शितम् ॥ १९ ॥

वरान्विभो त्वद्वरदेश्वराद्बुधः कथं वृणीते गुणविक्रियात्मनाम् ।
ये नारकाणामपि सन्ति देहिनां तानीश कैवल्यपते वृणे न च ॥२०॥
तदप्यहं नाथ न कामये क्वचिन्न यत्र युष्मच्चरणांबुजासवः ।
महत्तमांतर्हृदयान्मुखच्युतो विधत्स्वकर्णायुतमेष मे वरः ॥ २१ ॥
स उत्तमश्लोकमहन्मुखच्युतो भवत्पदांभोजसुधाकणानिलः ।
स्मृतिं पुनर्विस्मृततत्त्ववर्त्मनां कुयोगिनां नो वितरत्यलं वरैः ॥२२॥
यशः शिवं सुश्रव आर्य संगमे यदृच्छया चोपशृणोति ते सकृत् ।
कथं गुणज्ञो विरमेद्विना पशुं श्रीर्यत्प्रवव्रे गुणसंग्रहेच्छया ॥ २३ ॥
( ४ । २० । २३—२६ पृथुः )

वस्तुतस्तु ततोपि अधिकमिति पृथुप्रार्थनेनाह । चतुर्भिः । वरान्विति । हे विभो वरदानां ब्रह्मादीनामीश्वरात् वरप्रदात् त्वत्तः वरं दातुमुद्यतादपि सकाशाद्बुधः कथं त्वरान् वृणीते । कीदृशान् गुणेः विक्रियत इति गुणविक्रियोहंकारः स एवात्मा येषां तेषां ब्रह्मादीनां संबधिन इत्यर्थः । देहाभिमानिना भोग्यानिति वा तेष्वाविष्टो वुध एव न भवतीत्यर्थः सुलभत्वात् जुगुप्सितत्वात् अपीत्याह य इति बुध एवाहमपि न वृणे इति समुच्चयाय चकारः ॥ २० ॥

कैवल्यपते इति संबोधनात् कैवल्यं वरिष्यतीति मा शंकीरित्याह । तदप्यहमिति महत्तमानामंतर्हृदयात् मुखद्वारेण निर्गतो भवत्पदांभोजे मकरंदो यशःश्रवणादिसुख

यत्र नास्ति तादृशं चैतत् कैवल्यं तर्हि तत् क्वचित्कदाचिदपि न कामये। तर्हि किं कामयसे तदाह यशः श्रवणाय कर्णायुतं विधत्स्व। ननु कोप्येवं न वृतवान् किमन्यचिंतया ममत्वेवैष वर इति ॥ २१ ॥

ननु कैवल्याभावे रागद्वेषाद्याकुलानां श्रवणसुखमपि न स्यादित्याशंक्याह। स उत्तम श्लोक इति। भवत्पदांभोजसुधायाः कणा लेशाः तत्संबंधी योऽनिलः स एव दूरादपि किंचिद्यशः श्रवमात्रमपि इत्यर्थः। विस्मृतं तत्त्ववर्त्म यैः कुयोगिभिः तेषामपि पुनः स्मृतिं आत्मज्ञानं वितरति। अतो न खलु भक्तानां रागादिसंभवः अतो नोऽस्माकं सारग्राहिणामन्यैर्वरैरलं श्रवणसुखेष्वेव मोक्षादिसर्वसुखान्तर्भावादिति भावः ॥ २२ ॥

ननु श्रवणं मुक्तिफलमेव अतः फलं विहाय साधने भवतः कोऽयमग्रहस्तत्राह। यश इति। हे सुश्रवः मंगलकीर्ते ते शिवं यशः सतां संगमे यः सकृदपि यदृच्छयापि उपशृणोति गुणज्ञश्चेत्सः पशुं विनाऽन्यः कथं विरमेत् गुणातिशयं सूचयति। श्रीर्यश एव प्रकर्षेण वव्रे वृतवती। गुणानां सर्वपुरुषार्थानां संग्रहः स्वस्मिन्समाहारः तदिच्छया ॥ २३ ॥

तस्मिन्महन्मुखरितामधुभिच्चरित्रपीयूषशेषसरितः परितः स्रवन्ति।

ता ये पिबंत्यवितृषो नृपगाढकर्णैस्तान्न स्पृशंत्यशनतृड्भयशोकमोहाः ॥ २४ ॥

एतैरुपद्रुतो नित्यं जीवलोकः स्वभावजैः।

न करोति हरेर्नूनं कथामृतनिधौ रतिम् ॥ २५ ॥

( ४ । २९ । ४०–४१ नारदः )

ननु तेष्वपि क्षुत्पिपासादिकं प्राणिमात्रधर्मः कथममुं भक्तं न बाधेत तथा सति कुतः श्रवणसुखं तस्मान्मोक्ष एव निरुपद्रवः श्रेयानिति। नेत्याह नारदवचनेन। तस्मिन्निति। तस्मिन्साधुसंगमे महद्भिर्मुखरिताः कीर्तिता मधुभिदश्चरित्रमेव पीयूषं तदेव शिष्यत इति शेषो यासु असारांशरहिताः शुद्धामृतवाहिन्य इत्यर्थः। अवितृषः अलं बुद्धिशून्याः संतः गाढैः सावधानैः कर्णैः ताः सरितः पिबंति सेवन्ते। अशनशब्देन क्षुल्लक्ष्यते अशनादयस्तान्न स्पृशंति। श्रवणरसिकान्न बाधन्त इत्यर्थः ॥ २४ ॥

तर्हि सर्वे तत्कथामेव किमिति न शृण्वंति तत्राह। एतैरिति। एतैः क्षुत्पिपासादिभिः उपद्रुतः पीडितः कथामृतमेव अक्षयत्वाद् दुर्लभत्वाद्वा निधिः। तत्रायमर्थः। यावत्कुतश्चित्कथामहिमानं ज्ञात्वा कथंचिदपि न शृणोति तावत् क्षुधादिभिर्बाध्यत एव श्रवणाभासेनापि ज्ञातरसो जातरतिः पश्चान्न बाध्यत इति ॥ २५ ॥

नैषातिदुःसहा क्षुन्मां त्यक्तोदमपि बाधते।

पिबंतं त्वन्मुखांभोजच्युतं हरिकथामृतम् ॥ २६ ॥

( १० । १ । १३ परीक्षित् )

एतदेव परीक्षिदनुभवेनाह। नैषेति। त्यक्तोदकस्यापि मम हरिकथामृतपाननिमित्तं जीवनं तदुपरमे सद्य एव जीवनं न स्यात् ॥ २६ ॥

तं मोपयातं प्रतियंतु विप्रा गंगा च देवी धृतचित्तमीशे ।

द्विजोपसृष्टः कुहकस्तक्षको वा दशत्वलं गायत विष्णुगाथाः ॥२७॥

( १ । १९ । १५ परीक्षित् )

किं च हरिकथारसिकस्य मरणादपि भयं न भवतीति परीक्षितप्रार्थनेनैवाह । तं मोपयातमिति । तं मा मां उपयातं शरणागतं विप्रा भवंतः प्रतियंतु जानंतु देवी देवतारूपा गंगा च प्रत्येतु । द्विजोपसृष्टः द्विजप्रेरितः कुहको मायावी तक्षको दशतु वा शब्दः प्रतिक्रिया नादरे । कुहकोन्यः सर्पो वा । विष्णुगाथाः कथाः ॥ २७ ॥

अन्येषां पुण्यश्लोकानामुद्दामयशसां सताम् ।

कथां उपश्रुत्य भवेन्मोदः श्रीवत्साङ्कस्य किं पुनः ॥२८॥

( ३ । १९ । ३१ सूतः )

न चैतदसंभावितमिति कैमुतिकन्यायेनाह । अन्येषां तद्भक्तानामेव उपश्रुत्य कथामिति प्रकरणार्थः । मोदः सर्वतापोपरतिपूर्वक आनंदः ॥ २८ ॥

तस्माद्धीमन्कथां पुण्यां गोविंदचरिताश्रिताम् ।

महत्पुण्यप्रदां* यस्माच्छृणुष्वनृपसत्तम ! ॥ २९ ॥

नानुतृप्ये जुषन्युष्मद्वचो हरिकथामृतम् ।

संसारतापनिस्तप्तो मर्त्यस्तत्तापभेषजम् ॥ ३० ॥

( ११ । ३ । २ विदेहः )

तदेवं शुकवाक्येनोपसंहरति । तस्मादिति । यस्मात्संसारनिवर्तकं पुण्यं ददातीति महापुण्यप्रदात्तस्मात्तां कथां श्रृणुष्व नृपसत्तम परीक्षित् ॥ २९ ॥

तदेव महापुण्यप्रदत्वं जनकवाक्येन स्पष्टयति । ननु तृप्य इति । संसारतापैर्नितरां तप्तोहं तस्य तापस्य भेषजं हरिकथामृतरूपं युष्मद्वचो जुषमाणो नानुतृप्यामि संसारतापहरणे कारणांतराभावादिति भावः ॥ ३० ॥

संसारसिंधुमतिदुस्तरमुत्तितीर्षोर्नान्यः प्लवो भगवतः पुरुषोत्तमस्य ।

लीलाकथारसनिषेवनमंतरेण पुंसो भवेद्विविधदुःखदवार्दितस्य ॥३१॥

( १२ । ४ । ४० शुकः )

तदेवाह संसारसिंधुमिति । विविधदुःखमेव दवो दावानलः तेनार्दितस्य पीडितस्य अतः उत्तितीर्षोः पुंसो भगवतो याः लीलाः तासां याः कथाः सैव रसः

* तस्मादीश इति पाठान्तरम् ।

तन्निषेवणमंतरेणान्यः प्लवः उत्तरणसाधनं न भवेत्तथा च उपायांतरासंभवात् । तत्कथाश्रवणमेव यथाशक्ति निषेव्यमित्यर्थः ॥ ३१ ॥

कुतोऽशिवं त्वच्चरणाम्बुजासवं महन्मनस्तो मुखनिःसृतं क्वचित् ।
पिबंति ये कर्णपुटैरलं प्रभो देहंभृतां देहकृदस्मृतिच्छिदम् ॥ ३२ ॥

( १० । ८३ । ३ युधिष्ठिरादयः )

ननु अज्ञाननिवृत्या हि संसारनिवृत्तिर्भवति कथं कथाश्रवणमात्रेण । सत्यं अज्ञाननिवृत्युपायांतराणां बहुविघ्नग्रस्तत्वात् सापि श्रवणेनैव सिध्यतीति युधिष्ठिरवचनेनाह । कुतोऽशिवमिति । महतां मनस्तः सकाशात् मुखद्वारतो निःसृतं क्वचित् कदाचित् देहभृतां देहधारिणां देहकृच्चासावस्मृतिश्च अविद्या तां छिनत्तीति तथा । देहकृदीश्वरः तद्विषयाज्ञानच्छिदं वा ॥ ३२ ॥

विभ्व्यस्तवामृतकथोदवहास्त्रिलोक्याः पादावनेजसरितः शमलानि हंतुम् ।
आनुश्रवं श्रुतिभिरंघ्रिजमंगसंगैस्तीर्थद्वयं शुचिषदस्त उपस्पृशंति ॥ ३३ ॥

( ११ । ६ । १९ देवः )

नन्वज्ञाननिवृत्तिर्ज्ञानसाध्या कथं कथातः स्यात् । सत्यं विमलान्तःकरणे ज्ञानोदयः तद्वैमल्यं कथात इत्याह । देववाक्येन विभ्व्यस्तवेति । तव अमृतरूपा या कथा तदेव उदं उदकं वहंतीति तथा कीर्तिनद्यः तथा पादावनेजसरितो गंगाद्याश्च त्रिलोक्याः शमलानि हन्तुं विभ्व्यः समर्थाः । केन प्रकारेण आनुश्रवं गुरोरुच्चारणमनुश्रूयत इत्यनुश्रवो वेदः तत्र भवं कीर्तिरूपं तीर्थं श्रुतिभिः श्रवणेन्द्रियैः अंघ्रिज गाङ्गं च अङ्गसंगैः एवं शुचिषदः स्वाश्रमधर्मस्थाः तव तीर्थद्वयमुपस्पृशंति सेवन्त इति ॥ ३३ ॥

तव विक्रीडितं ब्रह्मन् नृणां परममंगलम् ।
कर्णपीयूषमास्वाद्य त्यजत्यन्यस्पृहां जनः ॥ ३४ ॥

( ११ । ६ । ४४ उद्धवः )

वस्तुतस्तु कथाश्रवणं साक्षादेवाज्ञाननिवर्तकमित्याह उद्धववाक्येन । द्वाभ्याम् । तवविक्रीडितमिति विक्रीडितं लीलां कर्णपीयूषं आस्वाद्य श्रुत्वा अन्यस्पृहां अन्येषु साध्यसाधनेषु स्पृहां त्यजन्ति* ॥३४॥

वयं त्विहमहायोगिन् भ्रमंतः† कर्मवर्त्मसु ।
त्वद्वार्तया तरिष्यामस्तावकैर्दुस्तरं तमः ॥ ३५ ॥

( १२ । ६ । ४८ उद्धवः )

---

* अयं भावः । यावत्तावद्रसास्वादरताः पीयूषे आस्वादिते यथा सर्वं लवणकट्वम्लादि रसं त्यजन्ति । तद्वदिति । अधिकः पाठः ॥

† त्यजन्त्यन्यस्पृहां जनाः इति पाठान्तरम् ।

किं च धर्यन्तिति । कर्मवर्त्मसु किं कर्म किमकर्मेति तावकैः त्वद्भक्तैः सह त्वद्वार्तया त्वत्कथयेनेत्यर्थः । तमः स विलासमज्ञानं तरिष्यामः ॥ ३५ ॥

तावत्कर्माणि कुर्वीत न निर्विद्येत यावता ।

त्वत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥ ३६ ॥

( ११ । २० । ९ श्रीकृष्णः )

ननु विचारेण कर्माकर्मनिर्णयः क्रियतां अन्यथा तत्त्यागे दोषः स्यादित्यत्राह । भगवद्वाक्येन तावत्कर्माणीति न निर्विद्येत न भोगेभ्यो विरज्येत तावत्स्वर्गादिफलानि कर्माणि कुर्यादेव विरक्तस्तु नित्यनैमित्तिके एव कुर्यादित्यर्थः । यदा तु मत्कथाश्रवणादौ आदिशब्देन नामश्रवणादिश्रद्धा जायते तदा तद्विरोधित्वात् कर्माणि त्यजेदेव ॥ ३६ ॥

कर्मण्यस्मिन्ननाश्वासे धूमधूम्रात्मनां भवान् ।

आपाययति गोविंदपादपद्मासवं मधु ॥ ३७ ॥

( १ । १८ । २ शौनकः )

एतदेव विरक्तानां शौनकादीनां वचनेन स्पष्टयति कर्मण्यस्मिन्निति । अस्मिन्कर्मणि सत्रे अनाश्वासे अविश्वसनीये वैगुण्यबाहुल्येन फलनिश्चयाभावात् । धूमेन धूम्रो विवर्णः आत्मा देहो येषां तेषामस्माकं तानस्मान् इत्यर्थः । कर्मणि षष्ठी । आसवं मकरंदं मधु मधुरम् ॥ ३७ ॥

श्रुतस्य पुंसां सुचिरश्रमस्य नन्वंजसा सूरिभिरीडितोर्थः ।

तत्तद्गुणानुश्रवणं मुकुंदपादारविंदं हृदयेषु येषाम् ॥ ३८ ॥

( ३ । १३ । ४ विदुरः )

तस्माद्विवेकिना भगवत्कथाश्रवणमेव कर्तव्यमितरथा पाठादि व्यर्थं स्यादित्याह । श्रुतस्येति । पुंसां श्रुतस्य अध्ययनस्यायमर्थः प्रयोजनं ईडितः कथितः । तत् भगवतः पादारविंदं हृदयेषु येषां तेभ्यो भक्तेभ्यो विष्णोस्तद्गुणानां अनुश्रवणम् ॥ ३८ ॥

छिन्नान्यधीरधिगतात्मगतिर्निरीहस्तत्तत्यजेऽछिनदिदं वयुनेन येन ।

तावन्न योगगतिभिर्यतिरप्रमत्तो यावद् गदाग्रजकथासु रतिं न कुर्यात् ३९

( ४ । २३ । १२ मैत्रेयः )

एवं योगिनामपि इदमेव कृत्यमिति मैत्रेयवचनेनाह । छिन्नान्यधीरिति । छिन्ना अन्यधीर्देहात्मबुद्धिर्यस्य यतोधिगतात्मगतिः अतएव निरीहः प्राप्तासु सिद्धिषु निःस्पृहः येन वयुनेन ज्ञानेन इदं संशयपदं अच्छिनत् चिच्छेद तत् तत्यजे त्यक्तवान् तत्प्रयत्नादप्युपरराममेत्यर्थः । तस्य योगसिद्धिष्वपि निःस्पृहत्वं युक्तमेवेत्याह । योगगतिभिः तावन्नाप्रमत्तः किंतु प्रमत्तो भवति । यावत् तस्य श्रीकृष्णस्य कथासु न रतिः तासु न लोभो जात इत्यर्थः ॥ ३९ ॥

तव कथामृतंतप्तजीवनं कविभिरीडितं कल्मषापहम् ।
श्रवणमंगलं श्रीमदाततं भुवि गृणंति ये भूरिदा जनाः ॥ ४० ॥

( १० । ३१ । ९ गोप्यः ॥ )

ननु कस्मादन्यत्र निःस्पृहत्वं युक्तं यस्माद्भगवतः कथाश्रवणातिरिक्तो लाभो नास्तीति गोपीनां वचनेनाह । तव कथेति । कथैवामृतं । अत्र हेतुः तप्तजीवनं । प्रसिद्धामृतादुत्कर्षमाहुः । कविभिर्ब्रह्मविद्भिरपि ईडितंस्तुतं देवभोग्यं त्वमृतं तैस्तुच्छीकृतं किंच कल्मषापहं काम्य कर्मनिरसनं तत्त्वमृतं नैवंभूतं । किंच श्रवणमंगलं श्रवणमात्रेण मंगलप्रदं न त्वनुष्ठानापेक्षं किं च श्रीमत् सुशांतम् । तत्तु मादकं । एवंभूतं त्वत्कथामृतं आततं यथा भवति तथा भुवि ये गृणंति निरूपयंति ते जनाः भूरिदाः बहुप्रदातारः । ततोधिको दाता नास्तीत्यर्थः । तथाच यं श्रावयति तस्याप्यल्पो लाभो नेति भावः ॥४०॥

नहि भगवन्न घटितमिदं त्वद्दर्शनान्नृणामखिलपापजयः ।
यन्नाम सकृच्छ्रवणात्पुक्कशोपि विमुच्यते साक्षात् ॥ ४१ ॥

( ६ । १६ । ४४ चित्रकेतुः )

अथ हेतुमाह । नहीति । हे भगवन् त्वद्दर्शनात् यत् नृणां अखिलस्य पापस्य जयः* इदं अघटितं न किंतु युक्तमेव यतः यस्य ते नाम्नः सकृदपि एकवारमपि श्रवणात् पुक्कशश्चांडालोपि साक्षात्तेनैव शरीरेण विमुच्यते सर्वतः पूतो भवति ॥ ४१ ॥

को नाम लोके पुरुषार्थसारवित् पुरा कथानां भगवत्कथासुधाम् ।
आपीय कर्णांजलिभिर्भवापहामहोविरज्येत विना नरेतरम् ॥ ४२ ॥

( ३ । १३ । ४९ मैत्रेयः )

नन्वेवमपि सर्वपावनत्वमायातं नतु लाभाधिकत्वमित्यत आह को नाम लोके इति । पुरुषार्थानां सारवित् पुरा कथानां पूर्वैः क्रियमाणानां कथानां मध्ये भगवतः कथासुधां भवापहां संसारनिवर्तिकां । नरेतरं पशुं विना को विरज्येत को न शृणुयादित्यर्थः ॥ ४२ ॥

नूनं दैवेन निहता येचाच्युतकथासुधाम् ।
हित्वा शृण्वन्त्यसद्गाथां पुरीषमिव विड्भुजः ॥ ४३ ॥

( ३ । ३२ । १९ श्रीकृष्णः )

किं च ये भगवत्कथां हित्वा असद्गाथां शृण्वंति ते पशुष्वपि अधमा इत्याह । नूनमिति । चकारस्त्वर्थः । ये अच्युतकथासुधां हित्वा असत्कथां विषयवार्तां शृण्वंति ते नूनं निश्चितं दैवेन विधात्रा प्रतिकूलं श्रोत्रं दत्वा निहताः विडम्बिता तेषां बाधिर्यमेव श्रेय

---

* चय इति पाठान्तरम् ॥

इति भावः यद्वा निहताः सर्वपुरुषार्थशून्याः कृता असत्कथाश्रवणादरे दृष्टान्तः विड्भुजः शूकरादयः ॥४३॥

यस्तूत्तमश्लोकगुणानुवादः संगीयतेऽभीक्ष्णममंगलघ्नः ।
तमेव नित्यं शृणुयादभीक्ष्णं कृष्णेऽमलां भक्तिमभीप्समानः ॥४४॥
( १२ । ३ । १५ शुकः )

तस्मादसत्कथां विहाय भगवत्कथा श्रवणमेव कर्तव्यम् । तदेव हि परमाभक्तिरित्याह । यस्तूत्तमेति । गुणानुवादः संगीयते केनापि । तु शब्दः असद्वार्तामात्रव्यवच्छेदार्थः । अभीक्ष्णं अमंगलघ्नः सकृद्गीतोपि वारं वारं । विघ्ननिवर्तकः । तं शृणुयादेवनित्यं प्रत्यहं तत्रापि अभीक्ष्णं वारं वारं । अमलां कामादिरहिताम् ॥ ४४ ॥

इत्थं परस्य निजवर्त्मरिरक्षयात्तलीलातनोस्तदनुरूपविडंबनानि ।
कर्माणि कर्मकषणानि यदूत्तमस्यश्रूयादमुष्य पदयोरनुवृत्तिमिच्छन् ॥४५॥
( १० । ९० । ४९ शुकः )

इतिश्रीमत्पुरुषोत्तमचरणारविंदकृपामकरंदविन्दुप्रोन्मीलितविवेकतैरभुक्तपरमहंसविष्णुपुरीग्रथितायां श्रीभागवतामृताब्धिलब्धश्रीभगवद्भक्तिरत्नावल्यां चतुर्थं विरचनम् ।

एवं प्रकरणार्थमुपसंहरति । इत्थमिति । इत्थं उक्तप्रकारेण निजवर्त्मनः भगवद्धर्ममार्गरिरक्षया रक्षणेच्छया आत्ता गृहीता लीलातनवः रामकृष्णावतारा येन तस्य भगवतः श्रीकृष्णस्य कर्माणि तदनुरूपाणि तत्तदवतारसदृशानि विडंबनानि अनुकरणानि येषु तानि श्रूयात् शृणुयात् कर्मकषणानि श्रोतुः कर्मनिवर्तकानि । अमुष्य य उत्तमस्य अनुवृत्तौ सेवायां यस्येच्छा । स तत्कथामेव शृणुयादिति भावः ॥ ४५ ॥

इतिश्रीटीकायां कान्तिमालायां चतुर्थं विरचनम् ॥

---

## अथ पञ्चमं विरचनम् ॥

इदं हि पुंसस्तपसः श्रुतस्य च स्विष्टस्य सूक्तस्य च बुद्धिदत्तयोः ।
अविच्युतोऽर्थः कविभिर्निरूपितो य उत्तमश्लोकगुणानुवर्णनम् १

( १ । ५ । २२ नारदः )

अथ कीर्तनं निरूपयितुं विरचनमारभते तत्र सर्वधर्मेषु हरिकीर्तनं श्रेष्ठमित्यभिप्रेत्याह । इदमिति । श्रुतादयो भावे निष्ठा । श्रुतं वेदाध्ययनम् । स्विष्टं यागादिसूक्तं मंत्रादिजपो वाक्कौशलं वा । बुद्धिविचारेण निश्चयसामर्थ्यं दत्तं दानं एतेषां इदमेवाविच्युतोर्थः नित्यं फलं किं तत् उत्तमश्लोकस्य गुणानुवर्णनं यद्यो कीर्तयंति तैः सर्वं जन्मान्तरे कृतमिति बोद्धव्यम् । ये भगवन्तं न कीर्तयन्ति तेषामेतत्सर्वं व्यर्थमिति भावः ॥ १ ॥

मृषा गिरस्ता ह्यसतीरसत्कथा न कथ्यते यद्भगवानधोक्षजः ।
तदेव सत्यं तदुहैव मंगलं तदेव पुण्यं भगवद्गुणोदयम् २

एतदेव कीर्तनफलं दर्शयन् स्पष्टयति द्वाभ्याम् । मृषा गिरस्ता इत्याभ्यां मृषा गिरः मिथ्यापवादः असतीः असत्यः असतां याः कथास्ताः यत् यासु उत्तमश्लोकस्य यशोऽनुगीयत इति ॥ २ ॥

तदेव रम्यं रुचिरं नवं नवं तदेव शश्वन्मनसो महोत्सवम् ।
तदेव शोकार्णवशोषणं नृणां यदुत्तमश्लोकयशोऽनुगीयते ३

( १२ । १२ । ४९—५० सूतः )

यत् तदेव सत्यं तदेवहि मंगलं । ह इति हर्षे । भगवद्गुणानां ऐश्वर्यादीनां कीर्तयितरि अभ्युदयो यस्मात् । नवं नवं यथा भवति तथा रुचिरं रुचिप्रदं महा उत्सवो यस्मात् ॥ ३ ॥

आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन् ।
ततः सद्यो विमुच्येत यद्बिभेति स्वयं भयम् ॥ ४ ॥

( १ । १ । १४ शौनकादयः )

न चैतानि असंभावितानि यतो यन्नाममात्रकीर्तनेन मुक्तिरपि साध्यत इति । संसृतिमापन्नः प्राप्तः विवशोपि गृणन् । ततः संसृतेः । अत्र हेतुः यद्यतो नाम्नः भयमपि स्वयं बिभेति कालोपि ॥ ४ ॥

न यद्वचश्चित्रपदं हरेर्यशो जगत्पवित्रं प्रगृणीत कर्हिचित ।
तद्वायसं तीर्थमुशन्ति मानसा न यत्र हंसा निरमन्त्यशिकूक्षयाः ॥ ५ ॥
तद्वाग्विसर्गो जनताघविप्लवो यस्मिन्प्रतिश्लोकमवद्धवत्यपि ।
नामान्यनन्तस्य यशोंकितानि यच्छृण्वन्ति गायंति गृणंति साधवः ॥ ६ ॥

( १ । ५ । १०—११ नारदः )

तस्माद्वासुदेवाविपयकत्वाद् वाक्चातुर्यादि व्यर्थमिति मुक्तमुक्तमित्याह यद्वच इति । चित्रपदमपि यद्वचो हरेर्यशो न प्रगृणीत तद्वायसं तीर्थं काकतुल्यानां रतिस्थानं उशन्ति मन्यन्ते कुतः मानसा सत्त्वप्रधाने मनसि वर्तमाना हंसा साधवः यतयो यत्र न निरमन्ति नितरां न रमन्ते । उशिकूक्षयाः उशिक् कमनीयं ब्रह्माख्यं क्षयो निवासो येषां ते । यथा प्रसिद्धा हंसामानसे सरसि चरंतः कमनीयपद्मखंडनिवासाः त्यक्तविचित्रान्नादियुक्ते-प्युच्छिष्टगर्ते काकक्रीडास्थाने न रमन्ते इति ॥ ५ ॥

विनापि पदचातुर्यं भगवत्प्रधानं वचः पवित्रमित्याह । तद्वाग्विसर्ग इति । स चासौ वाग्विसर्गः वाचः प्रयोगः । जनानां समूहो जनता । तस्याघं प्लावयति नाशयतीति । तथा यस्मिन् वाग्विसर्गे अवद्धवत्यपि अपशब्दादियुक्तेऽपि प्रतिश्लोकमनन्तस्य यशसा अङ्कितानि नामानि भवन्ति तत्र हेतुः यत् यानि नामानि साधवो महान्तः वक्तरि सति शृण्वंति । श्रोतरि सति गृणंति । अन्यदा तु स्वयमेव गायंति कीर्तयंतीति ॥ ६ ॥

ततोन्यथा किंचन यद्विवक्षतः पृथक्दृशः तत्कृतरूपनामभिः ।
न कर्हिचित् क्वापि च दुस्थिता मतिर्लभेत वाताहतनौरिवास्पदम् ॥ ७ ॥

( १ । ५ । १४ नारदः )

किं च हरिकीर्तनं विना कस्यापि चित्तं तत्त्वाभिमुखं न भवतीत्याह । ततोन्यथेति ततः उरुक्रमचेष्टितात् पृथक् दृशः अतएवान्यथा प्रकारान्तरेण यत्किंचिदर्थान्तरं विवक्षतः पुरुषस्य तया विवक्षया कृतैः स्फुरितैः रूपैर्नामभिश्च वक्तव्यत्वेनोपस्थितैः दुःस्थिता अन-वस्थिता सती मतिः कदाचित्क्वापि विषये आस्पदं स्थानं न लभेत वातेनाहता आघूर्णिता नौरिव ॥ ७ ॥

प्रगायतः स्ववीर्याणि तीर्थपादः प्रियश्रवाः ।
आहूत इव मे शीघ्रं दर्शनं याति चेतसि ॥ ८ ॥

( १ । ६ । ३४ नारदः )

हरिकीर्तनाच्च सद्यो भगवति परमानंद एव मतिः स्थिरा भवतीति नारदानु-भवेनाह प्रगायत इति । तीर्थपादो भगवान् । प्रियश्रवाः प्रियकीर्तिः चेतसि दर्शनं याति प्रकाशते आहूतो यथा तद्वदित्यर्थः ॥ ८ ॥

या याः कथा भगवतः कथनीयोरुकर्मणः ।

गुणकर्माश्रयाः पुंभिः संसेव्यास्ता बुभूषुभिः ॥ ९ ॥

( १ । १८ । १० सूतः )

तस्मात्फलितमाह । या या कथेति कथनीयानि उरूणि कर्माणि यस्य संसेव्याः नित्यं कीर्तयितव्या बुभूषुभिः निर्भयीभवितुमिच्छद्भिः अन्यथा भयं न निवर्तेत इति भावः ॥ ९ ॥

एतन्निर्विद्यमानानामिच्छतामकुतोभयम् ।

योगिनां नृपनिर्णीतं हरेर्नामानुकीर्तनम् ॥ १० ॥

( २ । १ । ११ । शुकः )

एतदेव शुकवाक्येनाह । एतन्निर्विद्यमानानामिति । इच्छतां कामिनां तत्फलसाधनमेतदेव । निर्विद्यमानानां मुमुक्षुणां मोक्षसाधनमेतदेव । योगिनां ज्ञानिनां फलं चैतदेव निर्णीतं नात्र प्रमाणांतरमित्यक्षरार्थः ॥ १० ॥

एतद्ध्यातुरचित्तानां मात्रास्पर्शेच्छया मुहुः ।

भवसिंधुप्लवो दृष्टो हरिचर्यानुवर्णनम् ॥ ११ ॥

( १ । ६ । ३५ नारदः )

ये तु विषयवासनाबद्धा गृहिणः तेषां मोक्षोपि कीर्तनादेव न भवतीत्याह । एतद्ध्यातुरिति । मात्रा विषयाः तेषां स्पर्शःभोगास्तेषामिच्छया आतुराणि चित्तानि येषां हरिचर्यानुवर्णनं यत् एतदेव भवसिंधौ प्लवः न केवलं श्रुतिप्रामाण्येन किंत्वन्वयव्यतिरेकाभ्यां दृष्ट एवेत्यर्थः ॥ ११ ॥

यस्यावतारगुणकर्मविडंबनानि नामानि येऽसुविगमे विवशा गृणंति ।

तेऽनेकजन्मशमलं सहसैव हित्वा संयान्त्यपावृतमृतं तमजं प्रपद्ये ॥ १२ ॥

( ३ । ९ । १५ ब्रह्मा )

अस्तु सदा कीर्तनं अंतकालेपि कृतं मोक्षाय भवतीति ब्रह्मवचनेनाह । यस्येति । अवतारादीनां विडंबनमनुकरणमस्ति येषु तत्रावतारविडंबनानि देवकीनन्दन इत्यादीनि गुणविडंबनानि सर्वज्ञो भक्तवत्सल इत्यादीनि । कर्मविडंबनानि गोवर्द्धनोद्धारणः कंसारातिरित्यादीनि । असुविगमे विवशा अपि गृणंत्युच्चारयंति । शमलं पापं न केवलं पापं किंतु अपावृतं निरस्तावरणं ऋतं ब्रह्म प्राप्नुवंति ॥ १२ ॥

अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि ।

यदन्याजहार विवशो नामस्वस्त्ययनं हरेः ॥ १३ ॥

एतेनैव ह्यघोनोऽस्य कृतं स्यादघनिष्कृतम् ।
यदा नारायणायेति जगाद चतुरक्षरम् ॥ १४ ॥
स्तेनः सुरापो मित्रधुक् ब्रह्महा गुरुतल्पगः ।
स्त्रीराजपितृगोहन्ता ये च पातकिनोऽपरे ॥ १५ ॥
सर्वेषामप्यघवतामिदमेव सुनिष्कृतम् । ३।२।१२-१
नाम व्याहरणं विष्णोर्यतस्तद्विषया मतिः ॥ १६ ॥
न निष्कृतैरुदितैर्ब्रह्मवादिभिस्तथा विशुद्ध्यत्यघवान् व्रतादिभिः ।
यथा हरेर्नामपदैरुदाहृतैस्तदुत्तमश्लोकगुणोपलंभकम् ॥ १७ ॥
नैकांतिकं तद्धि कृतेऽपि निष्कृते मनः पुनर्धावति चेदसत्पथम् ।
तत्कर्म निर्हारमभीप्सतां हरेर्गुणानुवादः खलु सत्वभावनः ॥ १८ ॥
अथैनं मापनयत कृताशेषाघनिष्कृतम् ।
यदसौ भगवन्नाम म्रियमाणः समग्रहीत ॥ १९ ॥
सांकेत्यं पारिहास्यं वा स्तोभं हेलनमेव वा ।
वैकुंठनामग्रहणमशेषाघहरं विदुः ॥ २० ॥
पतितः स्खलितो भग्नः सन्दष्टस्तप्त आहतः ।
हरिरित्यवशेनाह पुमान्नार्हति यातनाम् ॥ २१ ॥
गुरूणां च लघूनां च गुरूणि च लघूनि च ।
प्रायश्चित्तानि पापानां ज्ञात्वोक्तानि महर्षिभिः ॥ २२ ॥
तैस्तान्यघानि पूयन्ते तपोदानव्रतादिभिः । ६।२।१७
नाधर्मजं तद्धृदयं तदपीशांघ्रिसेवया ॥ २३ ॥
अज्ञानादथवा ज्ञानादुत्तमश्लोकनाम यत् ।
संकीर्तितमघं पुंसा दहेदेधो यथानलः ॥ २४ ॥

यथागदं वीर्यतममुपयुक्तं यदृच्छया ।
अजानतोप्यात्मगुणं तथा मंत्रोप्युदाहृतः ॥ २५ ॥
( ६ । २ । ७—१९ विष्णुदूताः )

एतदेव सातिशयं विष्णुदूतवाक्येन स्पष्टयति । अयमिति अयं अजामिलो ब्राह्मण· यत् यस्मात् विवशोपि हरेर्नाम व्याजहार उच्चारितवान् अतः जन्मकोटिकृतानामपि अंहसां पापानां कृतनिर्वेशः कृतप्रायश्चित्तः न केवलं प्रायश्चित्तमात्रं हरेर्नाम अपितु स्वस्त्ययनं मोक्षसाधनमपीति ॥ १३ ॥

ननु कर्मसादृगुण्यकरं हरेर्नामेति युक्तं । स्वातंत्र्येण तु कथमघनिवर्तकं तत्र आहुः । एतेनैवेति । अघोनः अघवतः यत् आ इति छेदः आ ईषत् आ· रसमात्रं चतुरक्षरं यन्नाम तज्जगाद । एतेनैव केवलेनैव चतुरक्षरमित्यनेन आधिक्यं च दर्शितं कथं जगाद नारायण आय एहि आगच्छ इत्येवं विक्रोशरूपेण पुत्राह्वानेन । अयं भावः । यथा प्रमाणबलात् कर्म· शुद्धिहेतुत्वं नाम्नां एवं निरपेक्षप्रायश्चित्तत्वमपि । अतएव इत्यवधारणद्वयम् ॥ १४ ॥

ननु कामकृतानां बहूनां पातकानां सहस्रश आवर्तितानां द्वादशाब्दादिकोटिभिरपि अनिवर्त्यानामेकमेव प्रायश्चित्तं कथं स्यात्तत्राहुः । द्वाभ्याम् । स्तेन इत्याभ्याम् । सुनिष्कृतं श्रेष्ठं प्रायश्चित्तमिदमेव । अत्र हेतुः यतो नाम व्याहरणात् तद्विषया नामोच्चारकपुरुष· विषया मदीयोयं मया सर्वतो रक्षणीय इति विष्णोर्मतिर्भवति ॥ १५-१६ ॥

ननु बहूनां पातकानां मन्वादिभिर्यथातथं प्रतिपादितानि कृच्छ्रचान्द्रायणादिवत् कर्माणि प्रायश्चित्तानि सन्ति तत् किमिति केवलं हरिनामैवेत्याशंक्य । इति अधिकः पाठः मुद्रिते पुस्तके दृश्यते ॥

अस्य प्रायश्चित्तस्य श्रेष्ठत्वमेवोपपादयति द्वाभ्याम् । ब्रह्मवादिभिः मन्वादिभिः उक्तैर्व्रतादिभिर्निष्कृतैस्तथा न शुद्ध्यति उदाहृतैरुच्चारितैर्यथा नाम पदैरित्यनेन नमो नारा· यणादि क्रियायोगोपि नापेक्षित इति दर्शितः । किं च नामपदोच्चारणं उत्तमश्लोकस्य गुणानां चोपलंभकं ज्ञापकं भवति न तु कृच्छ्रचांद्रायणादिवत् पापनिष्कृतिमात्रोपक्षीणमि· त्यर्थः ॥ १७ ॥

नैकांतिकं नात्यंतशोधकं तन्निष्कृतं यस्मिन्कृतेपि असत्पथे पापमार्गे मनो धावति चेत् कर्मणां पापानां निर्हारं आत्यंतिकं नाशमिच्छतां हरेर्गुणानुवाद एव प्रायश्चित्तं यतोऽसौ खलु सत्वभावनः चित्तशोधकः ॥ १८ ॥

एवमाशंकाः परिहृत्य अजामिलनेतॄन् यमदूतानादिशन्ति । अथेनमिति । अथ तस्मादेनं मा अपमार्गं नयत यतः कृतमशेषाणामघानां निष्कृतं येन यद्यस्मात्समग्रहीत् संपूर्णमुच्चारितवान् नामैकदेशेनाप्यलमिति भावः । म्रियमाण इत्यनेन पापांतरासंभव उक्तः । न तु तत्कालीनत्वमेव विवक्षितं तदानीं कृच्छ्रादिविधिवत् नामोच्चारणविधे· रप्यसंभवात् न च विधिं विना काकतालीयनामोच्चारणं पापहरमित्यत्रास्ति प्रमाण· मिति ॥ १९ ॥

नन्वयं पुत्रनामाग्रहीत् न तु भगवन्नाम। तत्राहुः। सांकेत्यमिति पारिहास्यंपरिह्सेन कृतं स्तोभं गीतालापपूरणार्थं कृतं। हेलनं किं विष्णुनेति। सावज्ञमपि वैकुंठनामोच्चारणम्॥ २०॥

ननु नायं संकल्पपूर्वकं वैकुंठनामाग्रहीत् किंतु पुत्रस्नेहपरवशः सन् तत्राह। पतित इति। अवशेनापि हरिरित्याह। स यातनां नार्हति पुमानित्यनेन नात्र वर्णाश्रमादिनियम इत्युक्तम्। अवशत्वमेवाह। पतितः प्रासादादिभ्यः। स्खलितः मार्गे। भग्नो भग्न गात्रः। संदष्टो सर्पादिभिः तप्तो ज्वारादिना आहतो दंडादिना॥ २१॥

ननु महतः पापस्य महदेव प्रायश्चित्तं युक्तं न तु अल्पं नामग्रहणमात्रं पापतारतम्येन कृच्छ्रादितारतम्यवत्। तत्राहुः द्वाभ्यां गुरूणामित्याभ्याम्। गुरूणां पापानां गुरूणि प्रायश्चित्तानि लघूनां च लघूनि तारतम्यं ज्ञात्वा मन्वादिभिरुक्तानि अतस्तत्र तथैव व्यवस्था हरिनाम्नां तु नेयं व्यवस्थोक्ता। विष्णोः स्मरणमात्रेण मुच्यते सर्वपातकैरिति वचनात्। न च सुराबिंदुपानेन महापातकत्वस्मरणवत् नाम्नस्तत्प्रायश्चित्तत्वस्मरणस्यायमतिभार इति॥ २२॥

किं च नैतानीति तैस्तपोदानादिभिः तान्ययानि एव पूयन्ते नश्यंति अधर्मोज्जातं मलिनं तु तस्य हृदयं पापकर्तुः यद्वा तेषामघानां हृदयं सूक्ष्मरूपं संस्काराख्यं न शुद्ध्यति तदापीशांघ्रिसेवया प्रकरणात् कीर्तनेनैव शुद्ध्यतीत्यर्थः। अयं भावः महान्त्यपि पापानि सकृदुच्चरितेनैव नाम्ना नश्यंति सकृत्प्रवर्तितेन दीपेन गाढध्वान्तमिव। तदावृत्त्या तु पापान्तरस्यानुत्पत्तिर्दीपधारण इव तमोंतरस्य। ततश्च वासनाक्षयात् हृदयशुद्धिः एतदर्थमेव तत्र तत्रावृत्तिविधानं पापक्षयश्च भवति स्मरतां अहर्निशमित्यादिषु तथैवाभ्युक्तं गुणानुवादः खलु सत्वभावनः तदपीशांघ्रिसेवयेति। अतोस्य हरिनाम्नैव पापक्षयः वासनाक्षयस्तु महापुरुषदर्शनादिति भावः॥ २३॥

ननु प्रायश्चित्तमिदमपि इति ज्ञात्वा नोक्तमिति चेत्तत्राह। अज्ञानादिति। बालकेन अज्ञानादपि प्रक्षिप्तोऽग्निर्यथाकाष्ठराशिं दहति तद्वत्॥ २४॥

नन्वेवमपि परिषदनुपदिष्टं श्रद्धाहीनं च कथं प्रायश्चित्तं भवेत्तत्राह यथागदमिति अगदमौषधं वीर्यवत्तममपि वक्तव्ये वीर्यतममित्युक्तं यदृच्छया श्रद्धाहीनमपि उपयुक्तं भक्षितं परिषद्मुखादजानतो स्वगुणमारोग्यं कुर्यात् मंत्रोपि नामात्मकः तथा स्वकार्यं कुर्यादेव नहि वस्तुशक्तिं श्रद्धादिकमपेक्षते॥ २५॥

एवं स विप्लावितसर्वधर्मा दास्याः पतिः पतितो गर्ह्यकर्मा।
निपात्यमानो निरये हतव्रतः सद्यो विमुक्तो भगवन्नाम गृह्णन्॥ २६॥

नातः परं कर्मनिबन्धकृन्तनं मुमुक्षतां तीर्थपदानुकीर्तनात्।
न यत्पुनः कर्मसु सज्जते मनो रजस्तमोभ्यां कलिलं ततोन्यथा॥ २७॥

अकलिलं

(६। २। ४५—४६ शुकः)

दिव्यतिरकेनायं महाजनोऽतिगुह्यमिदमज्ञात्वा द्वादशाब्दादिकं स्मरंति। किं च मायया देव्या अलं मोहिनमतिरयं जनः मधु मधुरं यथा भवत्येवं पुष्पितायां पुष्पस्थानीयैरर्थवादैर्मनोहरायां त्रय्यां जडीकृता अभिनिविष्टमतिर्यस्य अतो महत्स्वेव कर्मणि श्रद्धया युज्यमानो नाल्पे प्रवर्तते। दृश्यते हि प्राकृतस्य महति मंत्रादौ श्रद्धा अल्पकेनामाक्षरे च न तस्मादस्य ग्राहको नास्तीति तैर्नोक्तम्। यद्वा। स्वाधीनसिंहोऽस्तीत्येतावताश्च शृगालादिनिवारणाय तं यथा न प्रयुंजते तथा अतितुच्छत्वात्पापस्य तन्निरसनाय परममंगलं हरेर्नाम न स्मरंति। यद्वा। नाममाहात्म्यज्ञाने सर्वमुक्तिप्रसंगादित्येषा दिक् ग्रंथविस्तारभयान्नातिप्रपंच्यते इति प्रांचः। वयं तु ब्रूमः। वेदार्थ विचारकैर्मन्वादिभिर्वेदार्थो भगवन्नाममहिमा ज्ञातश्च बहुषु स्थानेषु निबद्धश्च तथापि द्वादशाब्दादीनां नाप्रामाण्यं। यथाहि यागादिकमुक्त्वा शेषे सर्वोपमर्दनेनाद्वैतमुक्तं वेदे तथा श्रीहरिनामापि प्रायश्चित्तेषु एवं च यथाद्वैतश्रुतिश्रद्धालुभिर्य्यागादिष्वकृतेष्वपि न वेदाप्रामाण्यं तथा नामोच्चारणमहिमाश्रद्धालुभिः प्रायश्चित्तान्तरे अकृतेऽपि सुकरत्वात् संभावनादीनां चाद्वैतपक्षतुल्यत्वादिति। तदुक्तं प्रायेणेति एवं श्रवणादिष्वपि द्रष्टव्यम्॥ ३१॥

एवं विमृश्य सुधियो भगवत्यनन्ते सर्वात्मना विदधते खलु भावयोगम्।
ते मे न दंडमर्हन्त्यथवा अमीषां स्यात्पातकं तदपि हंत्युरुगायवादः॥३२॥

(६। ३। २३—२६ यमः)

तस्मात्सर्वात्मना भगवतः कीर्तनं कर्तव्यमित्याह एवमिति भावयोगं भक्तियोगं अमीषां पातकं न स्यादेव यदि स्यात् उरुगायस्य वादः कीर्तनम्॥ ३२॥

अथापि मे दुर्भगस्य विबुधोत्तमदर्शने।
भवितव्यं मंगलेन येनात्मा मे प्रसीदति॥ ३३॥

अन्यथा म्रियमाणस्य नाशुचेर्वृषलीपतेः।
वैकुंठनामग्रहणं जिह्वा वक्तुमिहार्हति॥ ३४॥

क्वचाहं कितवःपापो ब्रह्मघ्नो निरपत्रपः।
क्व च नारायणेत्येतद्भगवन्नाम मंगलम्॥ ३५॥

(६। २। ३२—३४ अजामिलः)

यच्चोक्तं बह्वायाससाध्यद्वादशाब्दादिप्रायश्चित्तं प्रधानं सुकरं तु नामोच्चारणं न तथेति। नदतिमंदं अनेकजन्मार्जितपरमसुकृतसाध्यत्वान्नामोच्चारणस्येति अजामिलवचनेनाह त्रिभिः। अथापीति। यद्यप्यहमस्मिन्जन्मनि दुर्भगः पापीयान् तस्यापि मे नूनं विबुधोत्तमदर्शने तन्निमित्तं मंगलेन महता पूर्वेण पुण्येन भवितव्यं येन दर्शनेन आत्मा प्रसीदति इदानीमपि॥ ३३॥

एवमजामिलप्रकरणमुपसंहरति । एवमिति । विप्लाविताः सर्वे धर्मा येन हतं व्रतं स्वदारनियमादि यस्य स भगवन्नाम गृह्णन् न तत्प्रभावात्सद्यो मुक्तः पापेभ्यः यमपाशेभ्यो वा तस्मात्साधूक्तं असुविगम इत्यादि ॥ २६ ॥

- तदेवं फलितमाह नातः परमिति । कर्मनिबंधनस्य पापमूलस्य कृन्तनं छेदकं अतः परं नास्ति कस्मात्तीर्थपदस्यानुकीर्तनात् । तत्र हेतुः यद्यतोऽनुकीर्तनात् । ततोऽनुकीर्तनादन्यथा प्रायश्चित्तान्तरैः रजस्तमोभ्यां कलिलं मलिनमेव तिष्ठति यत् तन्मनः ॥ २७ ॥

म्रियमाणो हरेर्नाम गृह्णन् पुत्रोपचारितम् ।
अजामिलोप्यगाद्धाम किमुत श्रद्धया गृणन् ॥ २८ ॥

( ६ । २ । ४९ शुकः )

अथासंभावनां परिहरति म्रियमाण इति । म्रियमाण अवशत्वेन बुद्ध्याविहीनोपि । धाम विष्णोः । अगात् देहान्तरे ॥ २८ ॥

नामोच्चारणमाहात्म्यं हरेः पश्यत पुत्रकाः ।
अजामिलोपि येनैव मृत्युपाशादमूमुचत ॥ २९ ॥

एतावतालमघनिर्हरणाय पुंसां संकीर्तनं भगवतो गुणकर्मनाम्नाम् ।
विक्रुश्य पुत्रमघवान् यदजामिलोपि नारायणेति म्रियमाणउपैति मुक्तिम् ३०

एतदेव यमवाक्येन स्पष्टयति चतुर्भिः नामोच्चारणेत्यादिभिः । पुत्रका इति दूतसंबोधनम् । येनैव हरिनामोच्चारणमात्रेणैव ॥ २९ ॥

तस्मान्निरपेक्षसाधनं हरिनामोच्चारणं पुरुषार्थे इत्याह । तावतालमिति भगवतो गुणानां कर्मणां नाम्नां संकीर्तनमिति यत् एतावता पुंसां अघनिर्हरणाय पापक्षयमात्राय अलं उपयोगो नास्ति । अलं शब्दोऽत्रावधारणे उपयोगाभावमेवाह । अजामिलो महापातक्यपि नारायणेति विक्रुश्य न तु कीर्तयन् तत्र पुत्रं विक्रुश्य न तु हरिं अघवानशुचिरपि म्रियमाणः स्वस्थचित्तोपि मुक्तिमवाप । न त्वघनिर्हरणमात्रं मुक्तिदातुश्च कीर्तनस्यार्थकामादिदानमोपत्करमिति द्रष्टव्यम् ॥ ३० ॥

प्रायेण वेद तदिदं न महाजनोऽ य देव्या विमोहितमतिर्बत माययालम् ।
त्रय्यां जडीकृतमतिर्मधुपुष्पितायां वैतानिके महति कर्मणि युज्यमानः॥ ३१॥

नन्वेवं तर्हि मन्वाद्युक्ता द्वादशाब्दादिविधयोप्यर्थाः प्रसज्जेरन् तथायासादिबाहुल्यात् हरिनामोच्चारणमात्रस्य सुकरत्वात्तेनैव लघुना कृतार्थत्वात् गुरुप्रायश्चित्तेषु प्रम हासप्रसंगादिति चेत्तत्राह । प्रायेणेति महाजनो मन्वादिः यथामृतजीवनौषधिमजानन्तो धिया रोगनिर्हरणाय त्रिकटुकनिम्बादीनि सरंति तथा स्वयं भूशंभुप्रमुखाद्दशाब्दा-

द्व्यतिरकेनायं महाजनोऽतिगुह्यमिदमज्ञात्वा द्वादशाब्दादिकं स्मरंति। किं च मायया देव्या अलं मोहितमतिरयं जनः मधु मधुरं यथा भवत्येवं पुष्पितायां पुष्पस्थानीयैरर्थवादैर्मनोहरायां त्रय्यां जडीकृता अभिनिविष्टमतिर्यस्य अतो महत्येव कर्माणि श्रद्धया युज्यमानो नाल्पे प्रवर्तते। दृश्यते हि प्राकृतस्य महति मंत्रादौ श्रद्धा अल्पकेनामाक्षरे च न तस्मादस्य ग्राहको नास्तीति तेनोक्तम्। यद्वा। स्थानीयसिंहोऽस्तीत्येतावताश्च शृगालादिनिवारणाय तं यथा न प्रयुंजते तथा अतितुच्छत्वात्पापस्य तन्निरसनाय परममंगलं हरेर्नाम न स्मरंति। यद्वा। नाममाहात्म्यज्ञाने सर्वमुक्तिप्रसंगादित्येषा दिक् ग्रंथविस्तरभयान्नातिप्रपंच्यते इति भावः। वयं तु ब्रूमः। वेदार्थविचारकैर्मन्वादिभिर्वेदार्थो भगवन्नाममहिमा ज्ञातश्च बहुषु स्थानेषु निबद्धश्च तथापि द्वादशाब्दादीनां नाप्रामाण्यं। यथाहि यागादिकमुक्त्वा शेषे सर्वोपमर्दनेनाद्वैतमुक्तं वेदे तथा श्रीहरिनामापि प्रायश्चित्तेषु एवं च यथाद्वैतश्रुतिश्रद्धालुभिर्य्यागादिष्वकृतेष्वपि न वेदाप्रामाण्यं तथा नामोच्चारणमहिमाश्रद्धालुभिः प्रायश्चित्तान्तरे अकृतेपि सुकरत्वात् संभावनादीनां चाद्वैतपक्षतुल्यत्वादिति। तदुक्तं प्रायेणेति एवं श्रवणादिष्वपि द्रष्टव्यम्॥ ३१॥

एवं विमृश्य सुधियो भगवत्यनन्ते सर्वात्मना विदधते खलु भावयोगम्।
ते मे न दंडमर्हन्त्यथवा अमीषां स्यात्पातकं तदपि हंत्युरुगायवादः॥ ३२॥

(६। ३। २३—२६ यमः)

तस्मात्सर्वात्मना भगवतः कीर्तनं कर्तव्यमित्याह एवमिति भावयोगं भक्तियोगं अमीषां पातकं न स्यादेव यदि स्यात् उरुगायस्य वादः कीर्तनम्॥ ३२॥

अथापि मे दुर्भगस्य विबुधोत्तमदर्शने।
भवितव्यं मंगलेन येनात्मा मे प्रसीदति॥ ३३॥

अन्यथा म्रियमाणस्य नाशुचेर्वृषलीपतेः।
वैकुंठनामग्रहणं जिह्वा वक्तुमिहार्हति॥ ३४॥

क्वाहं कितवःपापो ब्रह्मघ्नो निरपत्रपः।
क्व च नारायणेत्येतद्भगवन्नाम मंगलम्॥ ३५॥

(६। २। ३२—३४ अजामिलः)

यच्चोक्तं महायाससाध्यद्वादशाब्दादिप्रायश्चित्तं प्रधानं सुकरं तु नामोच्चारणं न तथेति। तदतिमंदं अनेकजन्मार्जितपरमसुकृतसाध्यत्वान्नामोच्चारणस्येति अजामिलवचनेनाह त्रिभिः। अथापीति। यद्यप्यहमस्मिन्जन्मनि दुर्भगः पापीयान् तस्यापि मे नूनं विबुधोत्तमदर्शने तन्निमित्तं मंगलेन महता पूर्वेण पुण्येन भवितव्यं येन दर्शनेन आत्मा प्रसीदति इदानीमपि॥ ३३॥

अत्रानुमापकमाह । अन्यथेति । अन्यथा पूर्वपुण्यं विना कथंभूतं वैकुंठनाम गृह्यते वशीक्रियतेनेनेति ग्रहणम् ॥ ३४ ॥

अत्र हेतुः क चाहमिति ब्रह्मघ्नः विप्रत्वनाशकः महता पुण्येन विना अत्यंतासंभावितमेतदिति भावः ॥ ३५ ॥

ब्रह्महा पितृहा गोघ्नो मातृहाचार्यहाघवान् ।
श्वादः पुक्कशको वापि शुद्ध्येरन् यस्य कीर्तनात् ॥ ३६ ॥

( ६ । १३ । ८ ऋषयः )

तस्य नाम्नो मंगलत्वमेवाह । ब्रह्महेति । यस्य भगवतो नाम्नः । तस्मान्नामग्रहणं अनेकसुकृतकृत्यमिति बहुधायाससाध्यमिति भावः ॥ ३६ ॥

अहो बत श्वपचोऽतो गरीयान्यस्य जिह्वाग्रे वर्तते नाम तुभ्यम् ।
तेपुस्तपस्ते जुहुवुः सस्नुरार्य्या ब्रह्मानूचुर्नाम* गृणांति ये ते ॥ ३७ ॥

( ३ । ३३ । ७ देवहूतिः )

तदेवोपपादयति देवहूतिवाक्येन । अहो बत इति । अहो बत इत्याश्चर्ये यस्य जिह्वाग्रे वर्तते तुभ्यं नव नाम स श्वपचोपि अतः अस्मादेव हेतोः गरीयान् यद्यस्मात् वर्तते अत इति वा । कुत इत्यत आह । यतस्त एव तपस्तेपुः कृतवन्तः जुहुवुः होमं कृतवन्तः सस्नुः तीर्थेषु स्नाताः । आर्यास्त एव सदाचाराः ब्रह्म वेदम् अनूचुः अधीतवन्तः ये ते नाम गृणंतीत्यर्थः जन्मान्तरे तैस्तपो होमादिसर्वसुकृतमिति त्वन्नामकीर्तनेन महाभाग्योदयोवगम्यते यद्वा नन्नामकीर्तने तपोहोमाद्यन्तर्भूतमतस्ते पुण्यतमा इति स्थूलोपसंहाराभिप्रायेण व्याख्येयम् ॥ ३७ ॥

गृहेष्वाविशतां वापि पुंसां कुशलकर्मणाम् ।
मद्वार्त्तायातयामानां न बंधाय गृहामताः ॥ ३८ ॥

( ४ । ३० । १९ श्रीकृष्णः )

तदेवं हरिकीर्तनस्य सर्वत्रोपकारकत्वमुक्त्वा सर्वाश्रमाधिकारित्वं कैमुतिकन्यायेन भगवद्वचनेनाह । गृहेष्वाविशतामिति । गृहेष्वाविशतां आसक्तानां कुशलकर्मणां अनिषिद्धव्यापाराणां परस्परं मद्वार्तया यातयामानां गतकालानां पुंसां गृहा न बंधाय संसाराय भवंति सतां सम्मताश्च भवंतीति भक्तिसाधनत्वादिति । तथा च यदि विषयिणामप्यनेन सिद्धिस्तदा सुतरामन्येषामिति भावः ॥ ३८ ॥

तस्मादहं विगतविक्लव ईश्वरस्य सर्वात्मना महि गृणामि यथा मनीषम् ।
नीचोऽजयागुणविसर्गमनुप्रविष्टः पूयेत येन हि पुमाननुवर्णितेन ॥ ३९ ॥

( ७ । ९ । १२ प्रह्लादः )

---

* ब्रह्मानच्चुरिति पाठान्तरम् ।

न च केवलं स्तुतिमात्रं एतत्सदाचारादिति प्रह्लादवचनेनाह । तस्मादहमिति यस्मादेवं भगवान् कीर्तनेनैव तुष्यति तस्मादहं नीचोपि विगतविक्लवः गतशंकः सन् ईश्वरस्य महिमानं सर्वथा सर्वप्रयत्नेन स्वमनोषानुसारेण अनुवर्णयामि अजानतोपि तत्करणे हेतुमाह । येनैव महिम्ना अनुवर्णितेन अजया अविद्यया गुणविसर्गं संसारं अनुप्रविष्टः पुमान् शुद्धेत न तन्महिम्नोऽन्यस्य तथा शोधकत्वाभावात् ॥ ३९ ॥

सोहं प्रियस्य सुहृदः परदेवताया लीलाकथास्तव नृसिंहविरिंचिगीताः ।
अंजस्तितर्म्यनुगृणन् गुणविप्रमुक्तो दुर्गाणि ते पदयुगालयहंससंगः ॥४०॥

(७।९।१८ प्रह्लादः)

एवं चाविद्यया मुच्यते इत्युक्तम् । एतत्फलं दर्शयति । प्रह्लादवाक्येनैव सोहमिति । सोहं तव दासः सन् भो नृसिंह तव लीलाकथा अनुगृणन् दुर्गाणि महद्दुःखानि अंजसा तितर्म्मि तरामित्यर्थः । अत्र हेतुः गुणैरागादिभिः विशेषेण प्रमुक्तः सन् ततः ते पदयुगमेव आलयो येषां भक्तानां त एव हंसाः ज्ञानिनः तैः संगो यस्य मम सोहं कथं भूतस्य तव कथाः तत्राह । प्रियस्येत्यादि कुतो ज्ञाताः । विरंचेन गीताः तत् संप्रदायप्रवृत्ताः दास्ये प्रवृत्तस्य मम भगवदनुग्रहेण सत्संगस्ततो वीतरागतया भगवद्गुणवर्णनं ततश्च न दुःखादिसंभवः स्यादिति वाक्यार्थः ॥ ४० ॥

मंत्रतस्तंत्रतः छिद्रं देशकालार्हवस्तुतः ।
सर्वं करोति निश्छिद्रं नाम संकीर्तनं तव ॥ ४१ ॥

(८।२३।१६ शुक्रः)

एवं भगवत्कीर्तनं निरपेक्षं श्रेयःसाधनमित्युक्तम् । इदानीं कर्मांतरवैगुण्यपरीहारसमर्थमपीत्याह । शुक्राचार्यवाक्येन । मंत्रतस्तंत्रत इति । मंत्रतः स्वरादिभ्रंशेन तंत्रतः व्युत्क्रमादिना देशतः कालतश्च अर्हतः सत्पात्रतः वस्तुतस्तु दक्षिणादिना यच्छिद्रं न्यूनं तत्सर्वं तव नाम्नोनुकीर्तनमात्रमेव निःछिद्रं करोति ॥ ४१ ॥

या दोहनेऽवहनने मथनोपलेपप्रेंखेंखनार्भरुदितोक्षणमार्जनादौ ।
गायंति चैनमनुरक्तधियोश्रुकंठ्यो धन्या व्रजस्त्रिय उरुक्रमचित्तयानाः* ॥४२॥

(१०।४४।१५ मथुरापुरयोषितः)

तस्माद्धरिकीर्तनपरा एव धन्या इत्याह नगरनारीवचनेनाह । यादोहनेति । यादोहनादिषु एनं गायंति ता व्रजस्त्रियो धन्याः । अवहननं धानादेः कण्डनम् । प्रेंखेंखनं दोलांदोलनं । उक्षणं सेचनं कथंभूताः उरुक्रमे चित्तं उरुक्रमचित्तं तेनैव यानं सर्वविषयप्राप्तिर्यासां ताः पाठान्तरे उरुक्रमं चिंतयन्त्यः कुतः अनुरक्तधियः अत्र लिंगं अश्रुकंठ्यः ॥४२॥

---

* चिन्तयाना. इति पाठान्तरम् ।

क उत्सेहत संत्यक्तुमुत्तमश्लोकसंविदम् ।

अनिच्छतोपि यस्य श्रीरंगान्न च्यवते क्वचित् ॥ ४३ ॥

( १० । ४७ । ४८ गोप्यः )

यत एवं अत आह । क उत्सहेति । संविदं परस्परवार्त्ताः कः आत्महितार्थी त्यक्तुं त्यागं कर्त्तुं उत्सहेत यस्य उत्तमश्लोकस्य निजलाभपूर्णत्वात्तामनिच्छतोपि क्वचित्स्वभक्तवरदानसमयेपि तथा भगवत्कीर्तनविमुखं लक्ष्मीर्नानुगृह्णातीति भावः ॥ ४३ ॥

गायन्ति ते विशदकर्मगृहेषु देव्यो राज्ञां स्वशत्रुवधमात्मविमोक्षणं च ।

गोप्यश्च कुंजरपतेर्जनकात्मजायाः पित्रोश्च लब्धशरणा मुनयो वयं च ४४

( १० । ७१ । ९ उद्धवः )

अतएव विवेकिनः कीर्तनमेव कुर्वन्तीति नारदवचनेनाह । गायन्ति ते इति । जरासंधधृतानां राज्ञां देव्यः पत्न्यः ते विशदं कर्म स्वगृहेषु बाललालनादौ गायन्ति तत्कर्मस्वशत्रोर्जरासंधस्य वध आत्मनां च विमोक्षणं च वत्स मा रोदीः श्रीकृष्णः जरासंधं निहत्य तव पितरं मोचयित्वा कामान्पूरयिष्यतीत्यत्र दृष्टान्तः गोप्यश्चेत्यादि । यथा गोप्यः शंखचूडवधं स्वमोक्षणं च गायंति अवतारान्तरे च कुंजरपतेः नक्रान्मोक्षणं जनकात्मजायाश्च रावणात् अत्रैव च पित्रोः कंसगृहात् मोक्षणं च नक्रादीनां च वधं च मुनयः सनकादयः अन्येपि लब्धशरणाः भक्ताः ॥ ४४ ॥

जिह्वां लब्ध्वापि यो विष्णुं कीर्तनीयं न कीर्तयेत् ।

लब्ध्वापि मोक्षनिःश्रेणीं स नारोहति दुर्मतिः ॥ ४५ ॥

( हरिभक्ति सुधोदये ८ । ५ नारदः )

एवमन्वयं निरूप्य व्यतिरेके निंदामाह जिह्वामिति । लब्ध्वापि स्वाधीनजिह्वोपि स मोक्षनिश्रेणीं मोक्षारोहणसोपानं लब्ध्वापि नारोहतीति दुर्मतिर्ज्ञेयः । अत्र मोक्षनिःश्रेणी जिह्वाया दृष्टान्तः आरोहणं कीर्तनस्य ॥ ४५ ॥

गां दुग्धदोहामसतीं च भार्यां देहंपराधीनमसत्प्रजाश्च ।

वित्तं त्वतीर्थीकृतमंगवाचं हीनां मया रक्षति दुःखदुःखी ॥ ४६ ॥

यस्यां न मे पावनमंग कर्मस्थित्युद्भवप्राणनिरोधमस्य ।

लीलावतारेप्सितजन्म वास्याद्वंध्यां गिरं तां विभृयान्न धीरः ॥ ४७ ॥

(११।११।१९—२० श्रीकृष्णः।)

कथं दुर्मतिः कीर्तनविमुखत्वेन वृथा वाग्व्ययदुःखित्वादिति भगवद्वचनेनाह । गां दुग्धदोहामिति । दुह्यत इति दोहः पयः। दुग्धोदोहो। नोत्तरत्र दोहोस्ति यस्यास्तां अर्थ-

शून्यां असतीभार्यां कामशून्यां। देहं पराधीनं प्रतिक्षणं दुःखहेतुः असत्प्रजां दृष्टादृष्टफलशून्यं पुत्रं। अतीर्थीकृतं आगतेऽपि पात्रे अदत्तम्। दुःकीर्तिदुरितापादकं अंग हे उद्धव दुःपानन्तरं दुःखमेव यस्य सा रक्षति यथा तथा मयाहीनां वाचम्॥ ४६ ॥

एतद्भगवद्धीनत्वं विवृणोति तस्यामिति। जगतः शोधकं चरित्रं न स्यात् किं तत् अस्य विश्वस्य स्थित्यादिरूपं तद्धेतुरित्यर्थः। लीलावतारेषु ईप्सितं जगतः प्रेमास्पदम्। श्रीकृष्णरामादिजन्म वा न स्यात् तां निःफलां गिरं धीरो धीमान् न धारयेत् दुःखमात्रहेतुत्वादिति॥ ४७ ॥

कलिं सभाजयन्त्यार्या गुणज्ञा सारभागिनः ।

कीर्तनेनैव* कृष्णस्य मुक्तसंगःपरं व्रजेत ॥ ४८ ॥

नह्यतः परमो लाभो देहिनां भ्राम्यतामिह ।

यतो विंदेत परमां शांतिं नश्यति संसृतिः ॥ ४६ ॥

( ११। ५। ३६—३७ करभाजनः )

एवं मकीर्तने निंदामुक्ता विशेषात् कलियुगे कीर्तनं प्रशस्तमित्याह। कलिमिति कलिं कलियुगं सभाजयन्ति प्रशंसंति कलेर्गुणं जानन्ति यतः सारभागं सारांशं गृह्णंतीति सारभागिनः यत्र युगे कीर्तनेनैव कृष्णस्य अतएव सभाजयंतीत्यर्थः॥ ४८ ॥

अत्र कैमुतिकन्यायेन स्वार्थलाभं स्पष्टयति न ह्यत इति। अतः कीर्तनात् अन्यः परमः उत्कृष्टः लाभः अर्थो नास्ति स्वार्थोपायस्य इह संसारे भ्राम्यतां इह साधनोपायविचारे वा भ्राम्यतां अनिश्चयवतां। यतः कीर्तनात् परमां शांतिं मोक्षं। यदि चैवं तदा धर्मादिकं कीर्तनेनैव प्राप्यत इति किमु वक्तव्यम्। यद्वा नैरुज्यार्थं शर्कराभक्षणवत्स्वयमानन्दप्रदः स्वार्थान्तरहेतुरहेतुश्चेति परमो लाभः एवं तस्मात्कलेः प्रशंसा युक्तैवेति ॥४९॥

ते सभाग्या मनुष्येषु कृतार्था नृप निश्चितम् ।

स्मरन्ति स्मारयन्तो ये हरेर्नाम कलौ युगे ॥ ५० ॥

एवं च कीर्तने परप्रेरणमपि स्वकीर्तनतुल्यमित्याह। शुकवाक्येन ते सभाग्या इति। नृप परीक्षित् स्मारयन्ति परान्॥ ५० ॥

कलेर्दोषनिधे राजन् अस्ति ह्येको महान् गुणः ।

कीर्तनादेव कृष्णस्य मुक्तबंधः परं व्रजेत ॥ ५१ ॥

कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः ।

द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात ॥ ५२ ॥

( १२। ३। ५१—५२ शुकः )

---

* यत्र सङ्कीर्त्तनेनैव सर्वस्वार्थोऽभिलभ्यते इति पाठान्तरम्।

किंच दुष्टस्यापि कलेः कृतादिषु ध्यानादीनां फलानि हरिकीर्तनेनैव ददतः सभाजनं युक्तमेवेत्याह द्वाभ्याम्। कलेर्दोषनिधेरित्याभ्याम्। दोषनिधेर्दोषबलस्य एतत् सर्वं हरिकीर्तनादेव कलौ भवतीत्यर्थः ॥ ५१–५२ ॥

विष्णोर्नुवीर्यगणनां कतमोर्हतीह यः पार्थिवान्यपि कविर्विममे रजांसि।
चस्कंभ यः स्वरंहसास्खलतात्रिविष्टं यस्मात्त्रिसाम्यसदनादुरुकंपयानम् ॥५३॥

नान्तं विदाम्यहममी मुनयोग्रजास्ते मायाबलस्य पुरुषस्य कुतो परे ये।
गायन् गुणान् दशशतानन आदिदेवः शेषोऽधुनापि समवस्यति नास्य पारम् ५४

( २। ७। ४०—४१ ब्रह्मा )

ननु तर्हि कति गुणाः कीर्तनीयाः इत्यपेक्षायां आनंत्यान्नियमोऽशक्य इत्याह। विष्णोरिति। पृथिव्याः परमाणूनपि यो विममे गणितवान् तादृशोपि कोऽनुविष्णोर्वीर्यगणानां कर्तुमर्हति कथंभूतस्य विष्णोः त्रिविष्टं सत्यलोकं च चस्कंभ धृतवान्' किमिति चस्कंभ यस्मात् त्रैविक्रमे अस्खलिता प्रतिघातशून्येन स्वरंहसा स्वपादवेगेन त्रिसाम्यरूपं सदनमधिष्ठानं प्रधानं तस्मादारभ्य उरू अधिकं कंपयानं कंपेन यानं यस्येति वा। अतः कारणाच्चस्कंभ। आत्रिविष्टमिति छेदो वा सत्यलोकमभिव्याप्य यः सर्वं धृतवानित्यर्थः। यस्यैव वामनावतारस्यैते गुणाः तस्यानंतावतारस्य गुणा ब्रह्मादिभिरप्यसंख्येया इति ॥ ५३ ॥

एतदेव ब्रह्मवाक्येनैव प्रपंचयति नान्तमिति। ते तव पुरुषस्य यन्मायाबलं तस्यान्तम् विदामि नावैमि दशशतानि मुखानि यस्य सोपि द्विसहस्रजिह्वोपि यस्य गुणान् गायन् अन्तं पारं न समवस्यति न प्राप्नोतीति भावः ॥ ५४ ॥

किं च अन्यविषया अपि वाचः भगवन्नामादिमिश्रिताश्चेत् ताः अपि धन्या अन्यथा तु हीना इत्याह । यस्याखिलामिति । अखिलानि अखिलस्य वा अमीवानि पापानिघ्नंतीति अखिलामीवहानि तै येरस्य भगवतो गुणगणादिभिर्विमिश्रा युक्ता वाचः जगत्प्राणानि जीवयन्ति शुम्भन्ति शोभयंति पुनंति पवित्रयंति पुनः कथंभूतैः गुणादिभिः विरक्ता रहिताः तास्तु स्वलंकृता अपि वस्त्राद्यलंकृतशववच्छोभना मताः सतां संमताः अत्यंतमनुपास्या इति भावः ॥ ५६ ॥

इत्थं हरेर्भगवतो रुचिरावतारवीर्याणि बालचरितानि च शंतमानि ।
अन्यत्र चेह च श्रुतानि गृणान् मनुष्यो भक्तिं परां परमहंसगतौ लभेत ॥५७॥

इति पञ्चमं विरचनम् ।

( ११ । ३१ । २८ शुकः )

तस्मात्कीर्तनमेव परमा भक्तिरिति प्रकरणार्थमुपसंहरति रुचिरैः मनोहरैः कृष्णाद्यवतारैः कृतानि वीर्याणि बालचरितानि बाललीलाः शंतमानि परममंगलानि अन्यत्र विष्णुपुराणादौ इह श्रीभागवते श्रुतानि विश्रुतानि प्रसिद्धानि परमहंसगतौ कृष्णे भक्तिं लभेत कीर्तनपरस्य सर्वा भक्तिः सिद्ध्येदिति भावः ॥ ५७ ॥

इति पञ्चमं विरचनम् ।

---

## अथ षष्ठं विरचनम् ।

अहो यूयं स्म पूर्णार्था भवत्यो लोकपूजिताः ।
वासुदेवे भगवति यासामित्यर्पितं मनः ॥१॥

( १० । ४७ । २३ उद्धवः )

अथ स्मरणं निरूपयितुं विरचनमारभते तत्र भगवत्स्मरणशीलाः कृतार्था इत्युद्धववचनेनाह । अहो इति । यूयमेव कृतार्था भवत्य एव लोकपूजार्हा इत्यर्थः। इति सर्वात्मना । स्म नूनं । बहुप्रयाससाध्यत्वाद्भगवति मनो निवेशनस्येति योगादिफलमेव भवतीभिः प्राप्तमिति भावः ॥ १ ॥

एतावान्योग आदिष्टो मच्छिष्यैः सनकादिभिः ।
सर्वतो मन आकृष्य मय्यद्धावेश्यते यथा ॥ २ ॥

( ११ । १३ । १४ श्रीकृष्णः )

एतदेव भगवद्वचनेन स्पष्टयति । एतावानिति । यथा यतः मयि मनः आवेश्यते एतावान् एतत्पर्यंतः अन्यस्मात् अन्यचिंतां हित्वेत्यर्थः ॥ २ ॥

सकृन्मनः कृष्णपदारविन्दयोर्निवेशितं तद्गुणरागियैरिह ।
न ते यमं पाशभृतश्च तद्भटान्स्वप्नेपि पश्यंत्यपि चीर्णनिःकृताः ॥३॥

( ६ । १ । १९ शुकः )

एतत्फलं कैमुतिकन्यायेनाह । सकृदिति । यैः सकृदपि किं पुनः सदा कृष्णपदारविन्दयोरपि किं पुनः सर्वांगे निवेशितं बलादपि किं पुनः स्वतो निविष्टं तद्गुणराग्यपि किं पुनस्तद्गुणज्ञं यत्र कुत्रापि किं पुनस्तीर्थेषु * ते केपि यमं न पश्यन्ति किं पुनर्याम्यायातनाः तद्भटान् दूतानपि । किं पुनस्तदाकर्षणादिदुःखं स्वप्नेपि किं पुनः परमार्थतः तावतैवचीर्णनिःकृताः कृतप्रायश्चित्ताः ॥ ३ ॥

न भारती मेऽङ्ग मृषोपलक्ष्यते न वै क्वचिन्मे मनसो मृषा गतिः ।
न मे हृषीकाणि पतंत्यसत्पथे यन्मे हृदौत्कंठ्यवता धृतो हरिः ॥ ४ ॥

( २ । ६ । ३४ ब्रह्मा )

---

* हरिक्षेत्रादिषु इति पाठान्तरम् ॥

एवं फलान्तराण्यपि ब्रह्मवाक्येनाह न भारतीति । यस्मात् मे मया प्रौत्कंठ्यं भक्त्युद्रेकः तद्युक्तेन हृदा हरिर्ध्यातः । अंग हे नारद अतः मे वाङ्मन इंद्रियाणां वृत्तयः सत्यार्था न तु मत्प्रभावेणेत्यर्थः ॥ ४ ॥

एतावान्सांख्ययोगाभ्यां स्वधर्मपरिनिष्ठया ।
जन्मलाभः परः पुंसामंते नारायणस्मृतिः ॥ ५ ॥

( २ । १ । ६ शुकः )

तस्माद्भगवतः स्मरणतः परो लाभो नास्तीत्याह । एतावानिति । एतावानेव जन्मनो लाभः फलं तमाह । नारायणस्मृतिरिति सांख्यादिभिः साध्य इति तेषां स्वतंत्रेण लाभत्वं वारयति । सांख्यं आत्मनात्मविवेकः योगोऽष्टांगः । अन्ते तु नारायणस्मृतिः परो लाभः न तन्महिमा वक्तुं शक्यत इत्यर्थः ॥ ५ ॥

तस्मात्सर्वात्मना राजन् हृदिस्थं कुरु केशवम् ।
म्रियमाणोह्यवहितः ततो याहि* परां गतिम् ॥ ६ ॥
म्रियमाणैरभिध्येयो भगवान् परमेश्वरः ।
आत्मभावं नयत्यंग सर्वात्मा सर्वदर्शनः† ॥ ७ ॥

( १२ । ३ । ४९—५० शुकः )

एतदेव शुकवाक्येन स्पष्टयति द्वाभ्याम् तस्मादिति । हृदिस्थं कुरु चिंतय । अवहितः सावधानः सन् । ततः चिंतनात् परां गतिं भगवद्भावम् ॥ ६ ॥

स्मरणस्य साधारण्यमाह म्रियमाणैरिति । कैरपि अभिध्येयः अभिध्यातः आत्मभावं नयति ध्यातारम् । यद्वा । अभिध्येयो भवति यतस्तमात्मभावं नयतीत्यर्थः ॥ ७ ॥

अविस्मृतिः कृष्णपदारविन्दयोः क्षिणोत्यभद्राणि च शं तनोति ।
सत्वस्य शुद्धिं परमात्मभक्तिं ज्ञानं च विज्ञानविरागयुक्तम् ॥ ८ ॥

( १२ । १२ । ५५ सूतः )

ननु ज्ञानं विना स्मरणमात्रेण कथं भगवद्भावप्राप्तिः । सत्यं । ज्ञानस्यैतदधीनत्वादित्याह । अविस्मृतिरिति अविस्मृतिः स्मरणं । अभद्राणि पापानि क्षिणोति नाशयति शं कल्याणं तनोति । सत्वस्य अंतःकरणस्य शुद्धिं परमात्मनि कृष्णे प्रेमलक्षणां भक्तिम् । ज्ञानं शास्त्रीयम् । विज्ञानेन अनुभवेन विरागेण विषयवैतृष्ण्येन च युक्तं तनोति ॥ ८ ॥

विद्यातपःप्राणनिरोधमैत्रीतीर्थाभिषेकव्रतदानजप्यैः ।
नात्यंतशुद्धिं लभतेंऽतरात्मा यथा हृदिस्थे भगवत्यनंते ॥ ९ ॥

( १२ । ३ । ४८ शुकः )

---

* यासि इति पाठान्तरम् ।    † सर्वसंश्रयः इति पाठान्तरम् ।

ननु ज्ञानहेतुः सत्वशुद्धिः विद्यादिभिः साध्या तत्राह विद्यातप इति । विद्या उपासना तपः स्वधर्माचरणं प्राणनिरोधः प्राणायामः मैत्री भूतेषु भूते रति एभिः अंतरात्मा मनः शुद्धिं लभेत न त्वात्यंतिकीम् । यथा हृदिस्थे भगवति सवासनं मनः हरिसरणेनैव शुध्यतीत्यर्थः ॥ ९ ॥

पुंसां कलिकृतान् दोषान् द्रव्यदेशात्मसंभवान् ।

सर्वान्हरति चित्तस्थो भगवान्पुरुषोत्तमः ॥ १० ॥

( १२ । ३ । ४५ शुकः)

एतदेव स्पष्टयति पुंसामिति अत्र कलिग्रहणं विशेषाभिप्रायेण । द्रव्यं हिरण्यादि आत्मा मनः द्रव्यादिभिः संभवो येषां चित्तस्थः चित्ते स्फुरितः तेन ॥ १० ॥

यथा हेम्नि स्थितो वह्निर्दुर्वर्णं हंति धातुजम् ।

एवमात्मगतो विष्णुर्योगिनामशुभाशयम् ॥ ११ ॥

( १२ । ३ । ४७ शुकः )

एतद् दृष्टान्तेन दृढयति । यथा हेम्नि स्थित इति । धातुजं ताम्रादिसंदलेपजातं हेम्नो दुर्वर्णं मालिन्यं तत्र स्थितो वह्निरेव दहति न तु तोयादि एवं योगिनामपि विष्णुरेव न तु योगादिकमित्यर्थः । तस्मात्साधूक्तं विद्यातप इति ॥ ११ ॥

मन्येऽसुरान् भागवतांस्त्र्यधीशे संरंभमार्गाभिनिविष्टचित्तान् ।

ये संयुगेऽ चक्षत तार्क्ष्यपुत्रमंसेसुनाभायुधमापतन्तम् ॥ १२ ॥

( ३ । २ । २४ उद्धवः)

*किं च यथाकथंचित् भगवत्स्मरणमात्रमेव पुरुषार्थहेतुरिति उद्धववचनेनाह । मन्ये* सुरानिति । संरंभः क्रोधावेशः तेन मार्गेण भगवति अभिनिविष्टं चित्तं येषां तानसुरानपि भागवतानेव मन्ये । संयुगे संग्रामे । तार्क्ष्यः कश्यपस्तस्य पुत्रं गरुडं अंसे स्कंधेषु सुनाभायुधश्च आयुधो हरिः तमचक्षत अपश्यन् तस्मात्त्वय्यपि अनुग्रहो युक्त एवेत्यर्थः ॥ १२ ॥

भजन्त्यथ त्वामत एव साधवो व्युदस्तमायागुणविभ्रमोदयम् ।

भवत्पदानुस्मरणादृते सतां निमित्तमन्यद्भगवन्न विद्महे ॥ १३ ॥

( ४ । २० । २९ पृथु )

एवं फलितमाह भजन्तीति । भजन्ति स्मरन्तीत्यर्थः । व्युदस्तः मायागुणानां विभ्रमोदयो येन तं त्वां अत एव कुतः अन्यत् निमित्तं श्रेयोहेतुं न विद्महे वयं नास्त्येवेत्यर्थः ॥ १३ ॥

भूयादघोनि भगवद्भिरकारि दंडो यो नौ हरेत सुरेहलनमप्यशेषम् ।
मा वोनुतापकलया भगवत्स्मृतिघ्नो मोहो भवेदिह तु नौ व्रजतो-
रधोधः ॥ १४ ॥

( ३ । १५ । ३६ जयविजयौ )

यतः भगवत्स्मरणशीलस्य स्वकर्मजोऽनर्थोपि नोपतापायेति जयविजयवाक्येनाह । भूयादिति । अघोनि अघवति ॥ उचितो दंडः स एव भवद्भिः सनकादिभिरकारि नात्र भवतामपराधः कश्चित् । अतो नौ आवयोः भूयात् यः अशेषमपि सुरहेलनं ईश्वराज्ञातिक्रमणरूपं पापं हरेत् । किंतु युष्माकं यः कृपानिमित्तोऽनुतापः तस्य लेशेन अधोधो मूढयोनीर्व्रजतोरपि नौ आवयोः भगवत्स्मृतिघातको मोहो मा भवेत् । किंतु मोहेपि स्मृतिमेव प्रवहतादिति प्रार्थना ॥ १४ ॥

तन्नः समादिशोपायं येन ते चरणाब्जयोः ।
स्मृतिर्यथा न विरमेदपि संसरतामिह ॥ १५ ॥

( १० । ७३ । १५ राजानः )

एतदेव स्पष्टयति जरासन्धधृतानां राज्ञां वाक्येन । तन्न इति । येनोपायेन यथा यथावत् ते चरणद्वन्द्वयोः स्मृतिर्न विरमेत् किंतु सदा भवेदित्यर्थः ॥ १५ ॥

शय्याशनाटनालापक्रीडास्नानाशनादिषु ।
न विदुः संतमात्मानं वृष्णयः कृष्णचेतसः ॥ १६ ॥

( १० । ९० । ४६ शुकः )

ननु तथापि संसरणदुःखं स्यादेव नेत्याह । शय्येति । शय्यादिषु श्रीकृष्णचेतसो वृष्णयः सन्त मय्यात्मानं देहेन्द्रियादि न विदुः दुःखं न विदुरिति किं वाच्यं मद्त्यर्थः ॥ १६ ॥

अकिंचनस्य दान्तस्य शान्तस्य समचेतसः ।
मया संतुष्टमनसः सर्वाः सुखमया दिशः ॥ १७ ॥
न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं न सार्वभौमं न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा मय्यर्पितात्मेच्छति मद्विनान्यत् १८

( ११ । १४ । १३—१४ श्री कृष्णः )

अत्र भगवद्वचनेन हेतुमाह । एकादशे उद्धव प्रति त्रिभिः अकिंचनस्येति । अकिंचनस्य निष्परिग्रहस्य मया स्फुर्यमाणेनैव संतुष्टं मनो यस्य एवमानन्दसमुद्रे मग्नस्य कुतो दुःखानुसरणम् ॥ १७ ॥

परिपूर्णतामेवाह । न पारमेष्ठ्यमिति । रसाधिपत्यं पातालादिस्वाम्यम् । अपुनर्भवं मोक्षमपि । मद्विना मां हित्वा अन्यन्नेच्छति अहमेव तस्य प्रेष्ठः तथा च मत्सरणेनैव स कृतार्थः ॥ १८ ॥

मय्यर्पितात्मनः सभ्य निरपेक्षस्य सर्वतः ।

मय्यात्मना सुखं यत्तत्कुतस्तद्विषयात्मनाम् ॥१९॥

( ११ । १४ । १२ श्री कृष्ण )

एवं विषयसुखं मत्स्मरणसुखाधिकमिति किंवाच्यमित्याह मयीति । सभ्य हे उद्धव परमानन्दरूपेणात्मना स्वरूपेण स्फुरता ॥ १९ ॥

वैरेण यं नृपतयः शिशुपालपौंड्रशाल्वादयो गतिविलासविलोकनाद्यैः ।

ध्यायन्त आहृतधियः शयनासनादौ तत्साम्यमापुरनुरक्तधियां पुनः किम् २०

( ११ । ५ । ४८ नारदः )

अत्र च श्रीहरिस्मरणमहिमन्यसंभावना नास्तीति कैमुतिकन्यायेनाह । वैरेणेति । वैरेणापि शिशुपालादयो नृपतयः शयनासनादौ स्थिता विलासाद्यैः प्रकारैर्यं ध्यायन्तः तत्र मग्नमनसः सन्तः तस्य भगवतः साम्ये तुल्यत्वं ऐक्यं आपुः । यद्येवं तदानुरक्तधियां तत्साम्यप्राप्तिर्भवतीति किं वाच्यम् ॥ २० ॥

निभृतमरुन्मनोक्षदृढयोगयुजो* हृदि यन्मुनय उपासते तदरयोपि ययुः स्मरणात् ।

स्त्रिय उरगेन्द्रभोगभुजदण्डविषक्तधियो वयमपि ते समाः समदृशोंघ्रिसरोजसुधाः ॥ २१ ॥

( १० । ८७ । २२ श्रुतयः )

तत्राप्यसंभावनां परिहरति वेदवाक्येन । निभृतेति । मरुत्प्राणः मनश्च अक्षाणि इन्द्रियाणि च निभृतानि संयमितानि यैः । ते दृढं योगं युंजंति दृढयोगयुजस्ते तथाभूता मुनयो हृदि यत्तत्त्वमुपासते तदरयोपि तव स्मरणाद्ययुः प्रापुः । स्त्रियोपि कामतः उरगेन्द्रभोगभुजदण्डविषक्तधियः अहीन्द्रदेहसदृशयोर्भुजदण्डयोर्विषक्ता धीर्यासां ताः परिच्छिन्नदृष्टयः सममपरिच्छिन्नं त्वां पश्यन्त्यो वयं श्रुत्यभिमानिन्यो देवता अपि ते समा कृपाविषयतया । अंघ्रिसरोजसुधाः अंघ्रिसरोजं सुष्ठु धारयन्त्यः ताः । अयं भावः । इत्थंभूत स्तव स्मरणानुभावः । ये योगिनस्त्वां हृद्यालंबनं उपासते याश्च स्त्रियः कामतः परिच्छिन्नं ध्यायन्ति ये च द्वेषेण सर्वानपि तांस्त्वमेव प्रापयतीति ॥ २१ ॥

---

* यत्कृतधियः इति पाठान्तरम् ।

एनः पूर्वकृतं यत्तद्राजानः कृष्णवैरिणः ।
जहुस्ते ते तदात्मानः कीटः पेशस्कृतो यथा ॥ २२ ॥

( ७ । १० । ३९ नारदः )

ननु वैरिणां वैरकृते पापे विद्यमाने कथं भगवत्प्राप्तिः स्मरणमहिम्ने वेत्याह । एनेति । यत् एनः पापं इदानीं पापं कृतं पूर्वकृतं तत्सर्वं वैरिणोपि तदात्मानः कृष्णचेतसो जहुः तत् स्वरूपं प्रापुः । अत्र दृष्टान्तः यथा कीटः पूर्वरूपं विहाय पेशस्कृतो भ्रमरविशेषस्य ध्यानेन तद्रूपतां याति ॥ २२ ॥

विषयान् ध्यायतश्चित्तं विषयेषु विषज्जते ।
मामनुस्मरतश्चेतो मय्येव प्रविलीयते ॥ २३ ॥

( ११ । १४ । २७ श्रीकृष्णः )

यो यस्य स्मर्ता स तद्रूपो भवतीति भगवद्वचनेनाह । विषयानिति । विषज्जते विषयाकारं भवति मय्येव प्रविलीयते मदाकारं भवति प्रशब्देन ध्याता तन्मयं प्राप्नोतीति दर्शितं तस्मात्साधूक्तं सर्वतः स्मरणसुखं गरीयः स्मरत् मात्रं कृतार्थमिति ॥ २३ ॥

दृष्टंस्तवांघ्रियुगलं जनतापवर्गं ब्रह्मादिभिर्हृदि विचिंत्यमगाधबोधैः ।
संसारकूपपतितोत्तरणावलंबं ध्यायंश्चराम्यनुगृहाण यथा स्मृतिःस्यात् ॥ २४ ॥

( १० । ६९ । १८ नारदः )

अतएव कृतार्थेनापि भगवत्स्मरणं प्रार्थ्यते इति नारदवचनेनाह । दृष्टमिति । भक्तजनताया अपवर्गरूपम् । किं च अतिदुर्लभतया ब्रह्मादिभिर्योगेश्वरैरपि हृदि विचिन्त्य । किं च संसारकूपे पतितानां उत्तरणायावलंबमाश्रयं एवंभूतं तवांघ्रियुगलं मया दृष्टं अतः कृतकृत्योस्मि तथापि तव स्मृतिर्यथा स्यात्तथा अनुगृहाण ततस्त्वां ध्यायन्नेव चरामीति ॥ २४ ॥

आहुश्च ते नलिननाभ पदारविन्दं योगेश्वरैर्हृदि विचिन्त्यमगाधबोधैः ।
संसारकूपपतितोत्तरणावलंबं गेहंजुषामपि मनस्युदियात्सदा नः ॥ २५ ॥

( १० । ८२ । ४८ शुकः )

एवं च विषयत्यागाक्षमैरपि स्मरणं न त्याज्यमिति गोपीवाक्येनाह । हे नलिननाभ ते पदारविन्दं गेहंजुषां गेहसेविनामपि नोस्माकं मनसि सदा उदियात् आविर्भवेत् स्वप्नेपि तत्पदस्मृतिविच्छेदो मा भूदिति भावः ॥ २५ ॥

तस्मादसदभिध्यानं स्वप्नमायामनोरथम् ।
हित्वा मयि समाधत्स्व मनो मद्भावभावितम् ॥ २६ ॥

( ११ । १४ २८ श्रीकृष्ण )

इति श्रीमत्पुरुषोत्तमचरणारविन्दकृपामकरन्दबिंदुप्रोन्मीलितविवेकतैरभुक्तपरमहंस-
विष्णुपुरीग्रथितायां श्रीभागवतामृताब्धिलब्धश्रीमद्भक्ति-
रत्नावल्यां षष्ठं विरचनम् ।

एवं प्रकरणार्थं भगवद्वचनेनोपसंहरति । तस्मादिति यस्मादन्यत्साधनं तत्फलं च स्वप्नमनोरथवदसदभिध्यानमात्रं तस्मात्तद्विहाय मय्येव मनः समाहितं कुरु मद्भावभावितं मद्भावेन भजनेनैव शोधितं तावतैव सर्वानर्थनिवृत्तिः परमानन्दश्च स्यादिति ॥२६॥

इति श्रीटीकायां षष्ठं विरचनम् ।

---

## अथ सप्तमं विरचनम् ।

देवो सुरो मनुष्यो वा यक्षो गन्धर्व एव च ।
भजन्मुकुंदचरणं स्वस्तिमान् स्याद्यथा वयम् ॥ १ ॥

( ७ । ७ । ५० प्रह्लादः ।

### अथ सप्तमं विरचनम् ॥

अथ पादसेवनं निरूपयितुं विरचनप्रारभते तत्र पादसेवनं नाम परिचर्या प्रतिमादौ। तत्र सर्वोपकारकं भगवत्पादसेवनमिति प्रह्लादवचनेनाह । देवेति । भजन्सेवमानः स्वस्तिमान् इहामुत्र च ॥ १ ॥

मत्प्राप्तये पद्मभवादयः* प्रभो तप्यन्त उग्रन्तप ऐंद्रियेधियः ।
ऋते भवत्पादपरायणान्न मां विंदन्त्यहं त्वद्धृदया यतोऽजित ॥२॥

( ५ । १८ । २२ रमा )

तत्र इह लोके कल्याणं दर्शयति लक्ष्मीवाक्येन । मत्प्राप्तयेति । मत्प्राप्तये प्रह्लादयः तपस्तप्यन्ते कुर्वन्ति कथंभूताः ऐंद्रिये सुखे धीर्येषां अलुक्समासः । तथापि भगवत्पादपरायणादृते न मां विदन्ति मत्कटाक्षविलासिताविभूतीर्न लभंत इत्यर्थः । त्वय्येव हृदयं यस्याः साहं त्वत्परतंत्रत्वात् त्वदनुवर्तिन एव विलोकयामि नान्यमित्यर्थः ॥ २ ॥

त्वय्यंबुजाक्षाखिलसत्वधाम्नि समाधिनावेशितचेतसैके ।
त्वत्पादपोतेन महत्कृतेन कुर्वन्ति गोवत्सपदं भवाब्धिम् ॥ ३ ॥

( २० । २ । ३० ब्रह्मादयः )

परत्रापि स्वस्त्याह । त्वय्यंबुजाक्षेति । एके केचिदेव मुख्या या समाधिना त्वयि समावेशितचेतसोपि त्वत्पादपोतेन त्वच्चरणरूपेण पोतेन त्वत्सेवयेत्यर्थः । भवाब्धिं गोवत्सपदं कुर्वन्ति तरन्तीत्यर्थः । कथंभूतेन पादपोतेन महत्कृतेन महद्भिर्नारदादिभिः कृतेन मनसि सेव्यतया संपादितेन ॥ ३ ॥

अथापि ते देव पदाम्बुजद्वयं प्रसादलेशानुगृहीत एव हि ।
जानाति तत्त्वं भगवन्महिम्नो न चान्य एकोपि चिरं विचिन्वन् ॥ ४ ॥

( १० । १४ । २९ ब्रह्मा )

---

* अयेरा सुरादयः इति पाठान्तरम् ।

ननु कथं तत्त्वज्ञानं विना पादसेवनमात्रेण भवाब्धितरणम्। सत्यम्। तदप्यस्मादेवेत्याह ब्रह्मवाक्येन। अथापीति। अथापि यद्यपि तत्त्वज्ञानस्य बहूनि साधनानि तथापि सेव्यमानस्य ते पदाम्बुजद्वयस्य प्रसादलेशेन अनुगृहीत एव भगवतस्तव यो महिमा तस्य तत्त्वं जानाति अन्यस्तु एकः असंगोपि चिरमपि विचिन्वन्नपि योगाभ्यासरतोपि न जानातीति त्वत्पादसेवी तु जानात्येवेति हि शब्दस्यार्थः ॥ ४ ॥

मर्त्यो मृत्युव्यालभीतः पलायंल्लोकान् सर्वान् निर्भयं नाध्यगच्छत् ।
त्वत्पादाब्जं प्राप्य यदृच्छयाद्य स्वस्थः शेते मृत्युरस्मादपैति ॥ ५ ॥

( १० । ३ । २७ देवकी )

तत्त्वज्ञानस्य फलं सर्वतोभयनिवृत्तिरपि भगवत्पादसेवा साध्यैवेति देवकीवाक्येनाह। मर्त्य इति। मृत्युरेव व्यालः सर्पः तस्माद्भीतो लोकान् पलायमानः सन् निर्भयं भयाभावं नाध्यगच्छत् सर्वलोकानां कालग्रस्तत्वात्। त्वत्पादाब्जं तु यदृच्छया केनापि भाग्योदयेन सेव्यतया प्राप्य हे आद्य स्वस्थः शेते। निर्भयो भवतीत्यर्थः। यतो अस्मात् त्वत्पादसेवकान् मृत्युरपैति। यद्येवं तदा नरव्याघ्रादिभ्यो भयं न भवतीति किं वाच्यम् ॥ ५ ॥

तस्माद्रजोरागविषादमन्युमानस्पृहाभयदैन्याधिमूलम् ।
हित्वा गृहं संसृतिचक्रवालं /नृसिंहपादं भजताकुतोभयम् ॥ ६ ॥

( ५ । १८ । १४ प्रह्लादः )

तदेवाकुतोभयत्वं प्रह्लादवचनेनाह तस्मादिति रज आदिभिर्यः आधिर्मनस्तापः तस्य मूलं हित्वा कथंभूतं गृहं संसृतेः संसारस्य चक्रवालं मंडलं यतः पुनः पुनः संसारमंडले भ्रमिर्भवतीत्यर्थः। अकुतोभयं नृसिंहपादं भजत सेवध्वम् ॥ ६ ॥

अथात आनंददुघं पदाम्बुजं हंसा श्रयेरन्नरविन्दलोचन ॥
सुखं तु विश्वेश्वर योगकर्मभिस्त्वन्माययामी विहता न मायिनः ॥७॥

( ११ । २९ । ३ उद्धवः )

---

न यत् प्रसादायुतभागलेश-
मन्ये च देवा गुरवो जनाः स्वयम् ।
कर्तुं समेताः प्रभवन्ति पुंस-
स्तमीश्वरं त्वां शरण्यं प्रपद्ये ॥

८ । २४ । ४६ सत्यव्रतः

अपि च त्वच्चरणारविन्दयोर्यः प्रसादस्तस्मात् यद्भवति तत् कुतोऽपि न भवतीति कैमुतिकन्यायेन सत्यव्रतस्य राज्ञो वचनेनाह। यत् प्रसादस्यायुतभागस्तस्य लेशमप्यन्ये देवादयः सर्वे समेताऽपि स्वयं तन्निरपेक्षाः सन्तः कर्तुं न प्रभवन्ति ॥

ननु कस्मात्तर्हि सर्वे तत्पदाम्बुजं न भजन्ते यतो मुच्यंते तन्मायामोहितत्वादित्याह उद्धववाक्येन । अथा इति । यस्मात्पादसेवनादन्यत्र विषीदन्ति अथातः अत एव ये हंसाः सारासारविवेकचतुराः ते तु आनन्ददुघं समस्तानन्दपूरकं तव पदाम्बुजमेव सुखं यथा भवति तथा नु निश्चितं सेवन्ते । अमी तु विपश्चितः त्वन्माया विहता योगकर्मभिः मानिनः सन्तो न श्रयंते । यद्वा अमी त्वद्भक्ताः त्वन्मायया न विहताः अतएव योगकर्मभिः कृत्वा मानिनो न भवन्ति । अन्ये तु त्वन्मायया मोहिताः सन्तो वयं योगज्ञा कर्मकुशला इति केवलं गर्वयन्तो भवन्तीति न मुच्यन्त इत्यर्थः ॥ ७ ॥

कृच्छ्रो महानिह भवार्णवमप्लवेशां षड्वर्गनक्रमसुखेन तितीर्षन्ति ।

तत्त्वं हरेर्भगवतो भजनीयमंघ्रिं कृत्वोडुपं व्यसनमुत्तरदुस्तरार्णम् ॥ ८ ॥

(४ । २२ । ४० सनत् कुमारः)

ननु बहवः श्रेयो मार्गाः सन्ति तत्कथमयमेव सारः तत्राह सनत्कुमारवाक्येन कृच्छ्रो महानिति । अप्लवेशां न प्लवस्तरणहेतुः ईड् ईशो येषां तेषां महानिहदुस्तरस्तरणे कृच्छ्रः क्लेशः । तेहि असुखेन योगादिना इन्द्रियषड्वर्गग्राहं भवार्णवं तितीर्षन्ति तत् तस्मात् त्वं हे राजन् कृत्वा उडुपं प्लवं दुस्तरार्णम् दुस्तरार्णवमित्यर्थः ॥ ८ ॥

कस्त्वत्पदाब्जं विजहाति पण्डितो यस्तेत्र मानव्ययमानकेतनः ।

विशंकयास्मद् गुरुरर्चति स्म यद्विनोपपत्तिं मनवश्चतुर्दश ॥ ९ ॥

(४ । २४ । ६७ रुद्रः)

तस्माद्भगवत्पादसेवा न त्याज्येति भवद्भिः नित्यमिदं ज्ञातव्यमिति प्रचेतसः प्रति रुद्रवाक्येनाह । कस्त्वत्पदाब्जमिति । कः पंडितः चेतनावान् ते तव विष्णोः पदाब्जं त्यजेत् कथंभूतः यस्तत्रावमानोऽनादरस्तेन व्ययमानं केतनं शरीरं यस्य सः त्वामनाद्रियमानस्य वृथैव देहव्यय इत्यर्थः । त्वत्पदाब्जं अस्माकं गुरुर्ब्रह्मार्चति स्म । विशंकया विना शंकया विनोपपत्तिं दृढविश्वासेन मनवः अर्च्चन्ति स्म ॥ ९ ॥

यत्पादसेवाभिरुचिस्तपस्विनामशेषजन्मोपचितं मलंधियः ।

सद्यः क्षिणोत्यन्वहमेधती सती यथा पदांगुष्ठविनिःसृता सरित ॥ १० ॥

विनिर्धुताशेषमनोमलः पुमानसंगविज्ञानविशेषवीर्यवान् ।

यदंघ्रिमूले कृतकेतनः पुनर्न संसृतिं क्लेशवहां प्रपद्यते ॥ ११ ॥

(४ । २१ । ३१—३२ पृथुः)

किं च अस्तु सेवा तदभिरुचिरपि श्रेयसीत्याह । यत्पादसेवेति । यस्य पादयोः सेवायामभिरुचिः तपस्विनां संसारे संतप्तानां अशेषैर्जन्मभिः संवृद्धं धियो मलं सद्यः क्षपयति । कथंभूता अहन्यहनि वर्द्धमाना सती सात्विकी । तत्पादस्यैव महिमेति दृष्टान्तेनाह यथेति । सरित् नदी गंगा ॥ १० ॥

तत्फलमाह विनिर्द्धतेति। यस्य विष्णोः अंघ्रिमूले कृतकेतनः कृताश्रयः तत्सेवकः सन्नित्यर्थः। विनिर्द्धूता अशेषाः मनोमला यस्य। असंगो वैराग्यं तस्य विज्ञानस्य विशेषः साक्षा- त्कारः तदेव वीर्य्यं यस्य स संस्मृतिं न प्राप्नोतीत्यर्थः। एवंफला मनः शुद्धिः भगवत्पादसेवाभिरुचिमात्रेण भवति न चान्यथेत्यभिसंधिः॥ ११॥

कृष्णांघ्रिपद्ममधुलिन्न पुनर्विसृष्टमायागुणेषु रमते व्रजिनावहेषु।
अन्यस्तु कामहत आत्मरजः प्रमार्ष्टुमीहेत कर्म यत एव रजः पुनः स्यात् १२
(६। ३। ३३ यमः)

ननु कर्मणापि मनः शुद्धिर्भवति तत्राह। कृष्णांघ्रीति। यः श्रीकृष्णस्य अंघ्रिपद्मे मधुलिट् भ्रमरः तत्सेवक इत्यर्थः स विशेषतः सृष्टा मायागुणा विषया येषु व्रजिना- वहेषु व्रजिनमात्रेषु गृहेषु न रमते। अन्यः कामहतः कामोपप्लुतः आत्मनः रजः प्रमार्ष्टुं कर्मैव ईहेत यतः कर्मणः पुनः रज एव स्यात् तस्मात्पादसेवनमेव श्रेष्ठमिति भावः॥ १२॥

तदस्तु मे नाथ स भूरिभागो भवेऽत्र वान्यत्र तु वा तिरश्चाम्।
येनाहमेकोपि भवज्जनानां भूत्वा निषेवे तव पादपल्लवम्॥ १३॥
(१०। १४। ३० ब्रह्मा।)

तदेव ब्रह्मवाक्येन स्पष्टयति। तदस्तु मेति। यत एवं तत्तस्माद्धेतोः स भूरि- भागः तद् भूरिभाग्यं। यद्वा भागः अंशः। अयमर्थस्त्वत्प्रसाददायस्य अन्यैरन्यो गृहीतो ममत्वयमेवांशः अत्र भवे ब्रह्मजन्मनि तिरश्चामपि मध्ये यज्जन्म तस्मिन् वा येन भाग्येन भवदीयानां जनानां एकोपि कश्चिदपि भूत्वा तव पादपल्लवं निषेवे अत्यर्थं सेवे॥ १३॥

समाश्रिता ये पदपल्लवप्लवं महत्पदं पुण्ययशो मुरारेः।
भवाम्बुधिर्वत्सपदं परं पदं पदं पदं यद्विपदां न तेषाम्॥ १४॥
(१०। १४। ५८ शुकः)

अत्र पुनः पादपल्लवमेव तस्य फलमाह। समाश्रितेति। पुण्यं यशो यस्य स पुण्य- यशाः स चासौ मुरारिश्च तस्य पदपल्लव एव प्लवः तं सम्यगाश्रिताः सेवमाना महतां पदमाश्रयम् यद्वा महच्च तत्पदञ्चेति भिन्नं पदं। तेषां भवाम्बुधिः वत्सपदमात्रं भवति। किं च परं पदं श्रीवैकुंठाख्यं पदं पदस्थानं भवति, विपदां यत्पदं विषयः कदाचिदपि तेषां तत्र पुनः भवति न ततः पुनरावर्तन्त इत्यर्थः॥ १४॥

लब्ध्वा जनो दुर्लभमत्र मानुषं कथंचिदव्यंगमयत्नतोऽनघ।
पादारविंदं न भजत्यसन्मतिर्गृहान्धकूपे पतितो यथा पशुः॥ १५॥
(१०। ५१। ४६ मुचुकुन्दः)

एवमन्वयफलमुक्त्वा व्यतिरेके निंदामाह । मुचुकुंदवाक्येन । लब्ध्वेति । अथ कर्मभूमौ । अव्यंगं अविकलांगम् । किंच असति विषयसुखे शूकरादिसाधारणेऽमतिर्यस्य। गृहमेव अंधकूपः तस्मिन्पतितः यथा पशुस्तृणलुब्धो अंधकूपे पततीति ॥ १५ ॥

विप्राद्द्विषड्गुणयुतादरविंदनाभ पादारविंदविमुखाच्छ्वपचं वरिष्ठम् ।
मन्ये तदर्पितमनो वचने हितार्थ प्राणं पुनाति स कुलं न तु भूरिमानः १६

( ७ । ९ । १० प्रह्लादः )

ननु मा सेवतां भगवत्पादौ स्वधर्माचरणेनैव कृतार्थः स्यात् तत्र कैमुतिकन्यायेनाह । विप्रादिति । विप्रादपि धर्मसत्यतपोदममात्सर्यह्रीतितिक्षाअनसूयायज्ञदानधृतिश्रुतानि ये द्वादशगुणास्तैर्युक्तादपि अरविंदनाभस्य पादारविन्दाद्विमुखात् श्वपचं वरिष्ठं मन्ये । कथंभूतं । तस्मिन् अरविंदनाभे अर्पिता मन आदयो येन । ईहितं कर्मवरिष्ठत्वे हेतुः । स एवंभूतः श्वपचः सर्वकुलं पुनाति । भूरिः प्रचुरो मानो यस्य स तु विप्र आत्मानमपि न पुनाति कुतः कुलं । यतो भगवत्पादसेवाहीनस्यैते गुणा गर्वायैव भवन्ति न शुद्धये । अतो यस्तद्धीनः स हीन इति भावः ॥ १६ ॥

तानानयध्वमसतो विमुखान्मुकुंदपादारविंदमकरंदरसादजस्रम् ।
निष्किंचनैः परमहंसकुलैरसङ्गैर्जुष्टात् गृहे निरयवर्त्मनि बद्धतृष्णान् १७

( ६ । ३ । २८ यमः )

न केवलं हीनः यमयातनापात्रमपि स एवेत्याह यमवाक्येन । तानानयध्वमिति । असतः दुष्टान् तानेवाह मुकुंदपदारविंदयोर्यो मकरंदरूपो रसः सेवासुखं तस्माद्विमुखान् । कथंभूतात्तद्रसात् हंसैः निष्किंचनैः अजस्रं जुष्टात् । तेषां विमुखानां ज्ञापकमाह निरयवर्त्मनि स्वधर्मशून्ये गृहे बद्धा तृष्णा यैस्तान् ॥ १७ ॥

देवदत्तामिमं लब्ध्वा नृलोकमजितेंद्रियः ।
येनाद्रियेत त्वत्पादौ स शोच्यो ह्यात्मवंचकः ॥ १८ ॥

( १० । ६३ । ४१ रुद्रः )

किंत्वजीवन्मृता एव ते इत्याह रुद्रवाक्येन । देवदत्तमिति । इमं अव्यंगं नृलोकं मानुषशरीरं देवेन त्वयैव दत्तं नाद्रियेत त्वत्पादौ ॥ १८ ॥

त्वत्पादुके अविरतं परि ये चरंति ध्यायंत्यभद्रनशने शुचयो गृणन्ति ।
विन्दन्ति ते कमलनाभभवापवर्गमाशासते यदि त आशिष ईश नान्ये १९

( १० । ७२ । ४ युधिष्ठिरः)

यस्तु त्वत्पादसेवी स कृतार्थ इत्याह युधिष्ठिरवाक्येन त्वत्पादुकेति । त्वत्पादुके परि लब्ध्वा चरन्त्येपि यच्छन्दव्यवधानमपि ये परिचरन्ति देहेन सेव्यतया ध्यायंति मनसा ।

तथा गृणंति वाचा। कथंभूते अभद्रस्य नशने नाशके। ते भवस्यापवर्गे मोक्षं विन्दन्ति यद्याशासते तर्हि आशिषोपि ते एव विन्दन्ति नान्ये चक्रवर्तिनोपि ॥ १९ ॥

न नाकपृष्ठं न च सार्वभौमं न पारमेष्ठ्यं न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा वाञ्छन्ति यत्पादरजः प्रपन्नाः ॥२०॥
(१०। १६। ३७ नागपत्न्यः)

वस्तुतस्तु न वांछन्त्येवेत्याह। न नाकपृष्ठमिति। यस्य विष्णोः पादरजः प्रपन्नाः तत्सेवकाः नाकपृष्ठादि न वाञ्छन्तीति ॥ २० ॥

न कामयेऽन्यं तव पादसेवनादकिंचनप्रार्थ्यतमाद्वरं विभो ।
आराध्य कस्त्वां ह्यपवर्गदं हरे वृणीत आर्यो वरमात्मबन्धनम् ॥२१॥
(१०। ५१। ५५ मुचुकुन्दः)

तर्हि किं वाञ्छंतीति। तत्राह। न कामयेति। तव पादसेवनादन्यं वरं न कामये तव पादसेवनमेव कामये इत्यर्थः। अकिंचना निवृत्ताभिमानाः आर्यो विवेकी ॥ २१ ॥

न वयं साध्वि साम्राज्यं स्वराज्यं भोज्यमप्युत ।
वैराज्यं पारमेष्ठ्यं वा आनन्त्यं वा हरेः पदम् ॥ २२ ॥
कामयामह एतस्य श्रीमत्पादरजः श्रियः ।
कुचकुंकुमगंधाढ्यं मूर्ध्ना वोढुं गदाभृतः ॥ २३ ॥
(१०। ८३। ४१—४२ महिष्यः)

ननु आत्मबंधनत्वात् वरान्तरं मा वृणोतु मोक्षेण किमपराद्धमिति चेत् न तत्पादसेवारसिकस्य तद्विरोधिषु विषयेष्विव तच्छून्ये मोक्षादावपि वैराग्योचित्यादित्याह द्वाभ्याम् श्रीकृष्णपत्नीवाक्येन। न वयमिति। हे साध्वि द्रौपदि साम्राज्यं सार्वभौमपदं स्वाराज्यं ऐन्द्रं पदं भोज्यं तदुभयभोगभाक्तं। विविधेन राजत इति विराट् तस्य भावो वैराज्यं अणिमादिसिद्धिभाक्त्वमित्यर्थः। पारमेष्ठ्यं ब्रह्मपदं आनंत्यं मोक्षं हरेः पदं तत्सालोक्यं नतु कामयामहे। यद्वा पूर्वादि दिक्चतुष्टयाधिपत्यं साम्राज्यादि चतुष्कम्। किंतु एतस्य गदाभृतः श्रीमत्सर्वसंपदाश्रयपादरजो मूर्ध्ना वोढुं कामयामहे। तत्सेवामेव वाञ्छाम इत्यर्थः। तत्किं पादरज एव काम्यते अत आहुः। श्रियः कुचयोः कुंकुमस्य गंधेन आढ्यं ब्रह्मादिसेव्यया श्रियापि सेवितत्वात् इति भावः ॥ २२–२३ ॥

को नु राजन्निन्द्रियवान् मुकुंदचरणांबुजम् ।
न भजेत्सर्वतो मृत्युरुपास्यममरोत्तमैः ॥ २४ ॥
(११। २। २ शुकः)

तस्मात्फलितमाह । शुकवाक्येन को नु राजन्निति। हे राजन् परीक्षित् इंद्रियवान् अविकलेंद्रियः । सर्वतो मृत्युः भयं यस्य स । मुकुंदचरणाम्बुजं भजेत तस्यैव अभयत्वा-दिति भावः ॥ २४ ॥

मन्येऽकुतश्चिद्भयमच्युतस्य पादाम्बुजोपासनमत्र नित्यम् ।
उद्विग्नबुद्धेरसदात्मभावाद्विश्वात्मना यत्र निवर्तते भीः ॥ २५ ॥

( ११ । २ । ३३ कविः )

एतदेव कविवाक्येनाह । मन्य इति । न कुतश्चिद्भयं यस्य तदकुतश्चिदभयं तव अत्र संसारे असदात्मभावात् असति देहादौ आत्मभावात् भावनातः नित्यं सर्वदा उद्विग्नबुद्धेः विश्वात्मना सर्वथा निःशेषं यत्र पदांबुजोपासने भीः निवर्तते तत् । तस्मात्स्व-धर्मत्यागेनापि भगवत्पादसेवनं कार्य्यमिति रहस्यम् ॥ २५ ॥

त्यक्त्वा स्वधर्मं चरणांबुजं हरेर्भजन्नपक्वोऽथ पतेत्ततो यदि ।
यत्र क्व वा भद्रमभूदमुष्य किं को वार्थ आप्तोऽभजतां स्वधर्मतः ॥२६॥

( १ । ५ । १७ नारदः )

नन्वेवमपि भगवत्पादसेवने प्रवृत्तस्य तदपरिपाके स्वधर्मत्यागादनर्थ एव स्यात्त-त्राह । त्यक्त्वेति । ततो भजनात् कथंचिदपि यदि भ्रश्येत म्रियेत पतेद्वा तथापि भक्तिरसि-कस्य कर्मानधिकारात् नानर्थशंका अंगीकृत्याप्याह । वा शब्दः कटाक्षे । यत्र क्व वा नीचयो-नावपि अमुष्य भक्तिरसिकस्य अभद्रमभूत् किं । नाभूदेवेत्यर्थः । भक्तिवासना सद्भावादिति भावः । परमेश्वरमभजद्भिस्तु केवलं स्वधर्मतः को वा अर्थः प्राप्तः । अभजतामिति षष्ठी तु संबंधमात्रविवक्षया ॥ २६ ॥

स्वपादमूलं भजतः प्रियस्य त्यक्त्वान्यभावस्य हरिः परेशः ।
विकर्म यच्चोत्पतितं कथंचित् धुनोति सर्वं हृदि सन्निविष्टः ॥२७॥

( ११ । ५ । ४२ करभाजनः )

परिपक्वस्य तु ( पापमेव पतनमिति पाठान्तरम् ) न भवति कुतोऽनर्थशंका इत्याह स्वपादमूलमिति त्यक्तः अन्यस्मिन्देहादौ देवतांतरे वा भावो येन अत एव तस्य विकर्मणि प्रवृत्तिरेव न संभवति । यच्च कथंचित् प्रमादादिना वा उत्पतितं भवेत् तदपि हरिर्धु-नोति । ननु यमस्तन्न मन्येत तत्राह परेशः परे कालयमादयः तेषामपि नियंता । ननु श्रुति-स्मृती ममैवाज्ञे इति भगवद्वचनात् स्वाज्ञाभंगं कथं सहेत तत्राह । प्रियस्य पुत्रादिवत् । ननु नायं पापक्षयार्थं भजते तत्राह हृदि सन्निविष्टः सेव्यतया नहि वस्तुशक्तिरर्थितामपे क्षत इत्यर्थः । तस्माद् बुद्धिपूर्वकेऽपि विहितत्यागे प्रामादिकेऽविहिताचरणे च न भक्तस्य प्रायश्चित्तांतरमपीति भावः ॥ २७ ॥

कोनु त्वच्चरणांभोजमेवंवित विसृजेत्पुमान् ।

निःकिंचनानां शान्तानां मुनीनां यस्त्वमात्मदः ॥ २८ ॥

( १० । ८६ । ३३ बहुलाश्वः ।

उक्तमर्थं जनकवाक्येन द्रढयति को नु त्वच्चरणाम्भोजमिति । एवंवित् पूर्वोक्तज्ञाता विसृजेत् न भजेत भजित्वा वा त्यजेत् निःकिंचनानां त्वां विना न विपद्यते किंचन येषाम् ॥ २८ ॥

तावद्भयं द्रविणदेहसुहृन्निमित्तशोकस्पृहापरिभवो विपुलश्च लोभः ।

तावन्ममेत्य स दवग्रह आर्तिमूलं यावन्न तेऽङ्घ्रिमभयं प्रवृणीत लोकः २६

( ३ । ९ । ६ ब्रह्मा )

किं बहुनाभगवत्पादसेवावधिरेव सर्वोप्यनर्थ इति ब्रह्मवाक्येनाह । तावदिति । द्रविणादौ विद्यमाने भयं गते शोकः पुनश्च स्पृहा ततः परिभवस्तथापि विपुलो लोभः तृष्णा पुनः कथंचित् प्राप्ते ममेत्यसदवग्रहः आर्तिमूलं भयशोकादेः कारणं तावदेव यावत् तेंघ्रिमूलं न प्रवृणीत सेव्यतया नाश्रयेत । तदनंतरं सर्वभयनिवृत्तिरेवेति भावः ॥ २९ ॥

ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिनः ।

क्षेमाय पादमूलन्ते प्रविशंत्यकुतो भयम् ॥ ३० ॥

( ३ । २५ । ४२ कपिलः )

एवं योगिनामपि इदमेवाभयं इत्याह कपिलवाक्येन । ज्ञानं पादसेवाकर्तव्यतया निश्चयः वैराग्यं इहामुत्र च । भक्तिरेव योगः तेन प्रविशंति सेवन्त इत्यर्थः ॥ ३० ॥

इत्यच्युतांघ्रिं भजतोनुवृत्त्या भक्तिर्विरक्तिर्भगवत्प्रबोधः ।

भवंति वै भागवतस्य राजन् ततः परां शान्तिमुपैति साक्षात् ॥ ३१ ॥

( ११ । २ । ४३ कविः )

इति श्रीभक्तिरत्नावल्यां सप्तमं विरचनम् ॥ ७ ॥

एवं प्रकरणार्थमुपसंहरति इत्यच्युतमिति । अनुवृत्त्या सेवया भजतः भक्तिप्रेमलक्षणा भगवतः प्रबोधः भतत्प्करणे प्रकाशः । हे राजन् जनक ज्ञानादयो भवंति ततः साक्षात् अविलंबेन परां उत्कृष्टां शान्तिमुपैति प्राप्नोति । भगवत्पादसेवका भगवत्प्रसादादिहामुत्र कृतार्था भवंतीति भावः ॥ ३१ ॥

इति श्रीटीकायां भक्तिरत्नावल्यां सप्तमं विरचनम् ॥ ७ ॥

———

## अथाष्टमं विरचनम् ॥

यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कंधभुजोपशाखाः ।
प्राणोपहाराच्च यथेंद्रियाणां तथैव सर्वार्हणमच्युतेज्या ॥ १ ॥

( ४ । ३१ । १४ नारद )

अथार्चनं निरूपयितुं विरचनमारभते। तत्रार्चनं नाम पूजा। तत्र भगवत्पूजया सर्वेषां पूजा कृता भवतीत्याह्। यथेति। मूलात्प्रथमविभागाः स्कंधाः तद्विभाग भुजास्तेषामपि उपशाखाः। एतत् उपलक्षणं। पत्रपुष्पादयोपि तृप्यन्ति। ननु मूलमेकं विना स्वनिषेचनेन प्राणस्योपहारो भोजनं तस्मादेवेंद्रियाणां तृप्तिर्नतु तत्तदिंद्रियेषु पृथक् अन्नलेपनात् तथाच्युताराधनमेव सर्वदेवाराधनं न पृथगित्यर्थ ॥ १ ॥

यथाहि स्कंधशाखानां तरोर्मूलेवसेचनम् ।
एवमाराधनं विष्णोः सर्वेषामात्मनश्च हि ॥२॥

( ८ । ५ । ४९ ब्रह्मा )

किंच पूज्यांतरपूजावत् आत्मनोपि पूजा स्यात् यथाहीति भगवति पूजिते सात्मक जगदेव पूजितं भवतीत्यर्थ ॥ २ ॥

क्रियाकलापैरिदमेव योगिनः श्रद्धान्विता साधु यजन्ति सिद्धये ।
भूतेंद्रियान्तःकरणोपलक्षणं वेदे च तंत्रे च त एव कोविदाः ॥३॥

( ४ । २४ । ६२ रुद्र. )

तथा च भगवतमेव ये पूजयंति त एव वेदागमतत्त्वज्ञा इत्याह। क्रियेति। ये कर्मयोगिनः ये च ज्ञानयोगिनः इदं भगवत्स्वरूपमेव पूजयति त एव कोविदाः नतु एतदनादृत्य केवलज्ञानप्रवृत्ता अपि। तंत्रे आगमे। कथंभूतं भगवत्स्वरूपं भूतेंद्रियान्तःकरणै. अस्यतंत्रेयैदुपलक्ष्यते तत् नियतरूप। सिद्धिरत्र यथेष्टा द्रष्टव्या ॥ ३ ॥

चित्तस्योपशमोऽयं वै कविभिः शास्त्रचक्षुषा ।
दर्शितः सुगमो योगो धर्मश्चात्मसुदावहः ॥४॥

अयं स्वस्त्ययनः पंथा द्विजातेर्गृहमेधिनः ।
यच्छ्रद्धयाप्तवित्तेन शुक्लेनेज्येत पूरुषम् ॥ ५ ॥

( १० । ८४ । ३६-३७ मुनयः )

अत्र हेतुमाह द्वाभ्याम् । चित्तस्येति । अयमेव पंथाः चित्तस्य उपशमो यस्मात्पूजनं सुगमो । योगो मोक्षोपायः ॥ ४ ॥

स्वस्त्ययनः स्वस्ति क्षेम ईयतेऽनेनेति तथा । स कः यः श्रद्धया निःकामतया न्यायविचेन न्यायोपार्जितद्रव्येण अतएव शुक्लेन शुद्धेन पुरुषं भगवंतं इज्येन । भगवत्पूजारूप इत्यर्थः ॥ ५ ॥

नैवात्मनः प्रभुरयं निजलाभपूर्णो मानं जनादविदुषः करुणो वृणीते ।
यद्यज्जनो भगवते विदधीत मानं तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः ॥६॥

(७।९।११ प्रह्लादः)

अत्र द्विजातिपदं गृहमेधिपदं च अग्निष्टोमादि यज्ञरूपपूजाभिप्रायेण भगवत्पूजायां तु सर्वस्यैवाधिकार इति दर्शयन्नेव पूजकः परमेश्वरनिर्विशेषो भवतीत्याह नैवात्मन इति । अयं प्रभुरीश्वरः अविदुषः अल्पज्ञानात् जनात् पूजां आत्मनोर्थेन वृणीते प्राकृतवत् धनाद्यर्पणेन सम्मानं नेच्छति यतो निजलाभेनैव पूर्णः । तर्हि पूजां नेच्छति । तत्राह करुणः कृपालुः अतो वृणीत एव । तत्र हेतुः । यद्यत् यं यं मानं यद्वा । यद्यस्मात् येन धनादिना भगवते मानं पूजां विदधीत । तत् आत्मने तस्यैव भवतीत्यर्थः । तथा च मां पूजयित्वाऽयमपि पूज्यो भवत्विति कृपया पूजामिच्छतीति भावः । यथा मुखे कृतातिलकादिश्रीःशोभाप्रतिबिंबस्य भवति । ननु साक्षात्तस्यैव कर्तुं शक्यते । नथा च भगवत्मानं विना स्वस्यापि मानं न भवतीत्यर्थः ॥ ६ ॥

नूनं विमुष्टमतयस्तव मायया ते ये त्वा भवाप्ययविमोक्षणमन्यहेतोः ।
अर्चन्ति कल्पकतरुं कुणपोपभोग्यमिच्छन्ति यत्स्पर्शजं नरकेपि तृष्णाम् ॥७॥

(४।९।९ ध्रुवः)

यदि च परमेश्वरे कृतो मानः स्वस्यैव तद्वन्मानप्रदो भवति तदा तु स्वर्गादिफलकामनापि व्यर्थैवेत्याह । ध्रुववचनेन । नूनमिति । भवाप्यया जन्ममरणे तद्विमोक्षहेतुं त्वां अन्यहेतोः कामाद्यर्थं ये अर्चयन्ति ते नूनं विमुष्टमतयो वंचितचित्ताः यतस्ते कल्पतरुम् । त्वां अर्चितवन्तः कुणपतुल्येन आत्मदेहेन उपभोग्यं सुखमिच्छन्ति न चेच्छायोग्यं तदित्याह । यत्स्पर्शजं विषयसंबंधजं सुखं नरकेपि भवति । तथा च स्वर्गसुखमप्यप्रार्थनीयमिति भावः ॥ ७ ॥

यत्पादयोरशठधीः सलिलं प्रदाय दूर्वाङ्कुरैरपि विधाय सतीं सपर्याम् ।
अप्युत्तमां गतिमसौ भजते त्रिलोकीं दाश्वानविक्लवमनाः कथमार्तिमिच्छेत् ॥८॥

(८।२२।२३ ब्रह्मा)

अथ भगवत्पूजायां भावशुद्धिरेव परमा सामग्री नतु दंभादिदुष्टं वस्तुधनादि अपि इत्याह ब्रह्मवाक्येन । यत्पादयोरिति । यस्य तव पादयोः सलिलमात्रमपि प्रदाय सर्वोपि जनः उत्तमां गतिं प्राप्नोति तस्य तुभ्यमसौ बलिः त्रिलोकीं दाश्वान् दत्तवान् आर्तिं कथं प्राप्नुयात् । तस्मात् शाठ्यं विहाय स्ववित्ताद्यनुसारेण भगवानर्चनीय इति भावः ॥ ८ ॥

एवं क्रियायोगपथैः पुमान् वैदिकतांत्रिकैः ।

अर्चन्नुभयतः सिद्धिं मत्तो विंदत्यभीप्सिताम् ॥९॥

( ११ । २७ । ४९ श्रीकृष्णः )

इति श्रीमत्पुरुषोत्तमचरणारविंदकृपामकरंदबिंदुप्रोन्मीलितविवेकतैरभुक्तपरम-
हंसविष्णुपुरीग्रथितायां श्रीभागवतामृताब्धिलब्धश्रीभगवद्भक्ति
रत्नावल्यां अष्टमं विरचनम् ॥ ८ ॥

एवं भगवद्वाक्येन प्रकरणार्थमुपसंहरति । एवमिति एवं उक्तप्रकारेण मां अर्चयन् उभयतः इहामुत्र च । वैदिकैरिति त्रैवर्णिकाभिप्रायेण तान्त्रिकैरिति सर्वाभिप्रायेणेति पूजाप्रकरणं स्वग्रंथगौरवभयान्न लिख्यते ॥ ९ ॥

इति टीकायां अष्टमं विरचनम् ॥

## अथ नवमं विरचिनम् ॥

ममाद्यामंगलं नष्टं फलवांश्चैव मे भवः ।
यन्नमस्ये भगवतो योगिध्येयांघ्रिपंकजम् ॥१॥
(१०। ३८। ६ अक्रूरः)

अथ वन्दनं निरूपयितुं विरचनमारभते । तत्र तावद्भगवद्वंदनप्रवृत्तिरपि सर्वतो मंगलमित्याह अक्रूरवाक्येन। ममेति। यत् यतः भगवतो अंघ्रिपंकजं नमस्ये नमस्करिष्यामि अतः इदानीमेव मम अमंगलं नष्टं। भवश्च फलवान् भगवन्नमस्कारसामग्री प्राप्ता ॥ १ ॥

तत्तेऽनुकंपां सुसमीक्षमाणो भुंजान एवात्मकृतं विपाकम् ।
हृद्वाग्वपुर्भिर्विदधन्नमस्ते जीवेत यो मुक्तिपदे स दायभाक् ॥२॥
(१०। १४। ८ ब्रह्मा)

प्रवृत्तिफलमुक्त्वा नमस्कारफलमाह ब्रह्मवाक्येन। तत्तेनुकंपामिति। यस्मात्तव अनन्तो महिमा तत्तस्मात्ते अनुकंपां सुसमीक्षमाणः यदा भगवान्स्वयमेव कृपयिष्यति तदा मे श्रेयो भविष्यतीति चिंतयन् स्वकर्मफलं भुंजान एव तप आदिना नातिक्लिश्यन् हृद्वाग्वपुर्भिर्मनोवाक्कायैः ते तुभ्यं नमः नमस्कारं विदधत् यो जीवेत स मुक्तिपदे मुक्तौ पदे वैकुंठे च दायभाक् भागभागी तत् प्राप्नोतीत्यर्थः ॥ २ ॥

पतितः स्खलितो वार्तः क्षुधया विवशो गृणन् ।
हरये नम इत्युच्चैर्मुच्यते सर्वपातकात् ॥३॥
(११। १२। ४७ सूतः।)

अथ असंभावनां निरस्यन् कैमुतिकन्यायेनाह पतित इति। पतितः वृक्षात्। स्खलितो मार्गे। आर्तः ज्वरादिना क्षुधादिना वा विवशः अनिच्छन्नपि। परैस्तथा वक्तुमास्कंदितोपि हरये नम इति गृणन्नपि नतु नमस्कारबुद्ध्या उच्चैर्महतोपि सर्वपातकान्मुच्यते मुक्तो भवति ॥ ३ ॥

खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्वानि दिशो द्रुमादीन् ।
सरित्समुद्रांश्च हरेः शरीरं यत्किंच भूतं प्रणमेदनन्यः ॥४॥
(११। २। ४१ कविः)

इति श्रीमत्पुरुषोत्तमचरणारविन्दकृपामकरन्दबिंदुप्रोन्मीलितविवेकतैरभुक्तपरमहंस-
विष्णुपुरीग्रथितायां श्रीभागवतामृताब्धिलब्धभगवद्भक्ति-
रत्नावल्यां नवमं विरचनम् ॥ ९ ॥

तस्मात्कृत्यमुपदिशन् प्रकरणार्थमुपसंहरति । खमिति । खं आकाशं ज्योतींषि नक्षत्राणि सत्वानि प्राणिनः सरित्समुद्रान्सरितश्च समुद्राश्च सरित्समुद्रान् । अलं विशेषितेन । यत्किंचित् भूतं वस्तु । अनन्यः एतेषु भगवतोऽन्यत्वदर्शनशून्यः निष्कामो वा एतानि हरेः शरीरं इति बुद्ध्या प्रणमेत् इत्यर्थः ॥ ४ ॥

इति श्रीटीकायां नवमं विरचनम् ।

---

## अथ दशमं विरचनम् ॥

यन्नामश्रुतिमात्रेण पुमान् भवति निर्मलः ।
तस्य तीर्थपदः किंवा दासानामवशिष्यते ॥१॥

(९।५।१६ दुर्वासाः ॥)

अथ दास्यं निरूपयितुं विरचनमारभते तत्र तावद्भगवद्दासा एव सर्वतः कृतार्था इत्याह । यन्नामेति । यस्य भगवतो नाम श्रवणमात्रेण पुमान् निर्मलः शुद्धो भवति तस्य दासानां सर्वपुरुषार्थसाधने फले वा किं अवशिष्यते अपि तु न किंचित् दास्येनैव तस्य चरितार्थत्वादित्यर्थः ॥ १ ॥

तावद्रागादयस्तेनास्तावत्कारागृहं गृहम् ।
तावन्मोहोऽङ्घ्रिनिगडो यावत्कृष्ण न ते जनाः ॥२॥

( १० । १४ । ३६ ब्रह्मा )

तत्र इह लोककृतार्थतामाह ब्रह्मवाक्येन । तावदिति । रागादयस्तेनाः धैर्य-विवेकादिसर्वार्थापहारकाः गृहं च कारागृहं बंधनं स्थानं तावदेव मोहः ममता तावदेव । अंघ्रिनिगडः बंधनं । हे कृष्ण यावत् जनाः ते तव न भवंति । त्वदीया दासा न भवन्ति । अयमर्थः । पूर्वंविषयेषु रागो धैर्यापहार्यासीत् भगवद्दास्ये तु उत्पन्ने स एव रागो भक्ति-साधनेषु भवतीति गुण एव । एवं द्वेषोपि यः परेषु स्थितः सोपि पापद्वेषादिष्वेव जातः । एवं गृहं निरर्थककुटुंबपोषणादिमहद्दुःखफलत्वात् कारागृहं स्थितं । इदानीं भक्तिसाधन-त्वेन तेष्वेव कृतो मोक्षाय भवतीति तथा च विषयत्यागादिदुःखं विनापि दास्यं श्रेय इति इहोपकारकमिति भावः ॥ २ ॥

किं चित्रमच्युत तवैतदशेषबंधो दासेष्वनन्यशरणेषु यदात्मसात्त्वम् ।
योऽरोचयत्सह मृगैः स्वयमीश्वराणां श्रीमत् किरीटतटपीडितपादपीठः ॥३॥

( ११ । २९ । ४ उद्धवः )

परत्र च भगवत्स्वरूपप्राप्तिफलमाह उद्धववाक्येन । किं चित्रमिति । हे अच्युत अनन्यशरण्येषु दासेषु आत्मसात्वं त्वदधीनत्वं त्वन्मयत्वं इति यत्किं चित्रं नाश्चर्य-मित्यर्थः । यतो यो भगवान् श्रीरामरूपेण मृगैः शाखामृगैः सह साहित्यं सख्यमिति यावत् प्रीत्या एतवान् कथंभूतः ईश्वराणां ब्रह्मादीनां यानि श्रीमंति किरीटानि तेषां तटानि अग्राणि तैः पीडितं विलुठितं पादपीठं यस्य स्वयं तथाभूतोपि सन् अनुचरतामात्रतुष्टः मर्कटानपि सख्ये चकार तस्य मनुष्याणां दासभूतानामुद्धरणे किमाश्चर्यमिति भावः ॥३॥

कायेन वाचा मनसेंद्रियैर्वा बुद्ध्यात्मना वानुसृतः स्वभावात् ।
करोति यद्यत्सकलं परस्मै नारायणायेति समर्प्पयेत्तत् ॥४॥

( ११ । २ । ३६ कविः )

इति श्रीमत्पुरुषोत्तमचरणारविन्दकृपामकरन्दबिंदुप्रोन्मीलितविवेकतैरभुक्तपरमहंस-
विष्णुपुरीग्रथितायां श्रीभागवतामृताब्धिलब्धभगवद्भक्ति-
रत्नावल्यां दशम विरचनम् ॥ १० ॥

सर्वेषं सर्वकर्मार्पणरूपं दास्यस्वरूपं दर्शयन्नेव उपसंहरति । कायेनेति । आत्मना चित्तेन अहङ्कारेण वा अनुसृतो यः स्वभावः तस्मादपि यत्करोति । अयमर्थः । न केवलं विधितः कृतमेवेति नियमः स्वभावानुसारि लौकिकमपि यदिति । तथा भगवद्गीतासु । यत्करोषीत्यादि । यद्वा कायादीनामेव कर्म नात्मन इत्याशंक्याह । अभ्यासेनानुसृतात् ब्राह्मणत्वादिस्वभावात् यद्यत्करोषीत्यर्थः । तत्सकलं परस्मै परमेश्वराय नारायणायेति समर्पयेत् तथा च सति सकलकर्मार्पणरूपं दास्यं निर्वहतीति भावः ॥ ४ ॥

इति दशमं विरचनम् ।

---

## अथ एकादशं विरचनम्

अहो भाग्यमहोभाग्यं नन्दगोपव्रजौकसाम् ।

यन्मित्रं परमानंदं पूर्णं ब्रह्मसनातनम् ॥ १ ॥

( ११ । १४ । ३२ ब्रह्मा )

अथ सख्यं निरूपयितुं विरचनमारभते तत्र भगवत्सखानां महिमा वक्तुं ज्ञातुं न शक्यते इत्याह । अहोभाग्यमिति । अहोभाग्यमहोभाग्यमिति पुनरुक्त्यादरेण भाग्यस्य सर्वथा अपरिच्छेद्यत्वमुक्तं नन्दगोपव्रजौकसामिति सामान्यपदेन गवादीनामपि ग्रहणं तेषामपि कृष्णे नन्दादिवत् विश्वासाद्यविशेषात् । यन्मित्रं येषां मित्रं स्वरूपं कृष्णस्तु भगवान् स्वयमिति वचनात्परमानन्दं निरतिशयसुखस्वरूपं तथा च प्राकृतमित्रस्य परस्परोपकारित्वापेक्षया कदाचिद्विषयविरोधान्मैत्रीभंगश्च । कृष्णे तु परमानन्दे न तथा किं तु तेषामानंद एवेति भावः । प्राकृतमित्रस्य देशांतरगमनेन विश्लेषदुःखमपि भवति कृष्णे मित्रे न तथेत्याह । पूर्णमिति यथा च गतागतादिरहितमित्यर्थः । अत्र यद्यपि कृष्णस्यापि गोचारणादिना विश्लेषदुःखं भवति तथापि तच्चिंतयाप्यानन्दः प्राप्त्यानन्द-नियमः प्राकृतमित्रेषु न तथेति भावः । यद्वा कृष्णस्यापि पूर्णत्वे सर्वव्यापकत्वे ज्ञाते मथुराद्वारकावासिन्यपि कृष्णे तेषां विश्लेषदुःखं नाभूदेव प्राकृतमित्रे तु व्यापकता निश्चय एव न भवतीति भावः । यतः पूर्णं अत एव सनातनं नित्यम् । तथा च न प्राकृतमित्रवत् तद्व्यतिरेकदुःखशंकापीति भावः ॥ १ ॥

एवं मनः कर्मवशं प्रयुंक्ते अविद्ययात्मन्युपधीयमाने ।

प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावत् ॥ २ ॥

( ५ । ५ । ६ ऋषभः )

इति श्रीमत्पुरुषोत्तमचरणारविंदकृपामकरन्दबिन्दुप्रोन्मीलितविवेकतैरभुक्तपरमहंसविष्णु-पुरीग्रथितायां श्रीभागवतामृताब्धिलब्धश्रीभगवद्भक्ति-रत्नावल्यां एकादशं विरचनम् ॥ ११ ॥

अथ सख्यस्य फलं व्यतिरेकमुखेन दर्शयन् उपसंहरति ऋषभदेववाक्येन । एव-मिति । एवं यथा पुनः संसार एव भवति तथा पूर्वकृतं कर्म कर्तृभूतम् । मनः कर्मभूतं वशं प्रयुंक्ते पुनः कर्मनिष्ठं करोति । जीवन्मुक्तकर्मव्यावृत्त्यर्थमाह । अविद्ययेति । अविद्योपहितस्य पुंसः पूर्वकर्मणा तथैव कर्मणि मनः प्रेर्यते यथा संसारो न निवर्तेत इत्यर्थः । तर्हि कथं निस्तारस्तत्राह मयि मय्येव वासुदेवे सर्वाश्रये यावन्न प्रीतिः सख्यं तावत् । देहयोगेन संबंधेन सति चास्मिन् दुःखेन च न मुच्यते अर्थात् मत्सख्येनैव सर्वानर्थनिवृत्तिरिति मया सख्यं कुर्यादेवेति भावः ॥ २ ॥

इति एकादशं विरचनम् ।

# अथ द्वादशं विरचनम्

मर्त्यो यदात्यक्तसमस्तकर्मा निवेदितात्मा विचिकीर्षितो मे ।
तदामृतत्वं प्रतिपद्यमानो मयात्मभूयाय च कल्पते वै ॥ १ ॥

( ११ । २९ । ३४ श्रीकृष्णः )

अथ निवेदनं निरूपयितुं विरचनमारभते तत्र भगवति निवेदितात्मनस्तत्कृपया सर्वोऽपि पुरुषार्थो भवति भगवद्वचनेनाह । मर्त्येति । यदात्यक्तसमस्तकर्मा सन् मे निवेदितात्मा भवति । यथा विक्रीतस्य दत्तस्य वा गवाश्वादेर्भरणपालनादिचिंता न क्रियते तथा भगवति देहादिकं समर्प्य निश्चितो यस्तिष्ठति स निवेदितात्मासौ तदा मे विचिकीर्षितः विशिष्टः कर्तुमिष्टो भवति ततः अमृतत्वं मोक्षं प्रपद्यमानो मयात्मभूयाय मदैक्याय मत्समानैश्वर्यायेति यावत् कल्पते योग्यो भवति । वैश्युवम् ॥ १ ॥

धर्मार्थकाम इति योऽभिहितस्त्रिवर्ग ईक्षात्रयी नयदमौ विविधा च वार्ता ।
मन्ये तदेतदखिलं निगमस्य सत्यं स्वात्मार्पणं स्वसुहृदः परमस्य पुंसः ॥ २ ॥

( ७ । ६ । २६ प्रह्लादः )

इति श्रीमत्पुरुषोत्तमचरणारविन्दकृपामकरन्दबिन्दुप्रोन्मीलितविवेकतैरभुक्तपरमहंसविष्णुपुरीग्रथितायां श्रीभागवतामृताब्धिलब्धश्रीभगवद्भक्तिरत्नावल्यां द्वादश विरचनम् ॥ १२ ॥

ननु सर्वकर्मत्यागेनात्मनि वेदनमेव चेत् श्रेयः तदा कर्मादिविधानामानर्थक्यं स्यात् तथोत्तरेणोपसंहरति प्रह्लादवाक्येन । धर्मार्थेति । धर्मोऽर्थः कामश्चेति यः त्रिवर्गः । तदर्थं च ये इच्छाद्या अभिहिता । ईक्षा आत्मविद्या त्रयी कर्मविद्या नयदमौ तर्को दंडनीतिश्च विविधा वार्ता जीविका तदेतत्सर्वं निगमस्यार्थजातमन्तर्यामिनः स्वसुहृदः परस्य पुंसः स्वात्मार्पणसाधनं चेत्तर्हि सत्यं मन्ये सत्यपरत्वात् अन्यथा तदसत्यमेव । यद्वा । तदेतदखिलं निगमस्य त्रैगुण्यविषयस्य प्रतिपाद्यं मन्ये सत्यं पुनस्त्रैगुण्यलक्षणं परस्य पुंसः स्वात्मार्पणमेवेत्यर्थः । तदुक्तं भगवता त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुनेति ॥ २ ॥

इति द्वादशं विरचनम् ।

---

## अथ त्रयोदशं विरचनम्

देवर्षिभूताप्तनृणां पितृणां न किंकरो नायमृणी च राजन् ।
सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कर्त्तम् ॥ १ ॥

( ११ । ५ । ४१ करभाजनः )

आत्मनिवेदनं

अथेह यथोक्तवैदिकलौकिकस्वविहितसाधनहीनानां भगवच्चरणप्रवेश एव शरणं इत्यभिप्रेत्य विरचनमारभते तत्र भगवच्छरणप्रविष्टः देवादिसेवात्यागेऽपि न तेषामभियोज्य इत्याह करभाजनवाक्येन । देवर्षीति । आप्ताः पोष्याः कुटुंबिनः इतरे देवादयः पंचयज्ञदेवताः । देवानां होमे ऋषीणामध्ययने भूतानां बलिदाने पितॄणां श्राद्धादौ एव देवादीनां आराधनादौ न किंकरः न दासवन्नियोज्यः । तदकरणे च न ऋणी न पापीत्यर्थः देवादीनां भगवद्भक्त ऋणी अत एव तेषां किंकरः तदर्थंनित्यं पंचयज्ञादिकर्ता तथा च स्मृतिः हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत् इति अयं तु न तथा । कोसौ सर्वात्मना यः मुकुंदं शरणं गतः । कर्तंभेदम् । कृत्यमिति पाठे हेमादीत्यर्थः । यद्वा । सर्वात्मना सर्वात्मकत्वेन तथा भगवच्चरणस्य जगदेव प्रीणातीति भावः ॥ १ ॥

किं दूरापादनं तेषां पुंसामुद्दामचेतसाम् ।
यैराश्रितस्तीर्थपदश्चरणो व्यसनात्ययः ॥ २ ॥

( ३ । २३ । ४१ मैत्रेयः )

न केवलं देवादीनामनभियोज्यः सर्वसुखभागी च भवतीत्याह । किं दुरापादनं सर्वं सुलभमित्यर्थः । उद्दामचेतसां धीराणां व्यसनं इहामुत्र संसारदुःखं तस्यात्ययो यस्मात् ॥ २ ॥

शारीरा मानसा दिव्या वैयासे ये च मानुषाः ।
भौतिकाश्च कथं क्लेशा बाधंते हरिसंश्रयम् ॥ ३ ॥

( ३ । २२ । ३५ मैत्रेयः )

तत् नेह व्यसनात्ययत्वं दर्शयति मैत्रेयवाक्येन । शारीरा इति । दिव्या आन्तरीक्षा मानुषाः शत्रुप्रभवाः भौतिकाः शीतोष्णादिप्रभवाः क्लेशहेतवः कथं बाधन्ते न बाधन्त इत्यर्थः । वैयासे व्यासपुत्र हे विदुर परत्रव्यसनात्ययत्वमाह ॥ ३ ॥

यत्र निर्विष्टमरणं कृतान्तो नाभिमन्यते ।
विश्वं विध्वंसयन् शौर्य्यवीर्य्यविस्फुरितभ्रुवा ॥ ४ ॥

( ४ । २४ । ५६ रुद्रः )

यत्रेति । यत्र भगवत्पादमूले अरणं शरणं प्रविष्टं जनं कृतान्तः कालो ममायं वश्य इति नाभिमन्यते वीर्य्यं प्रभावः शौर्यमुत्साहः ताभ्यां विस्फूर्जितया क्षुभितया भ्रुवा विश्वं विध्वंसयन्नपि ॥ ४ ॥

अविस्मितं तं परिपूर्णकामं स्वेनैव लाभेन समं प्रशान्तम् ।
विनोपसर्पत्यपरं हि बालिशः श्वलांगुलेनातितितर्ति सिंधुम् ॥ ५ ॥

( ६ । ९ । २२ देवाः )

नन्वेवमपि देवतान्तरशरणादस्य को विशेषस्तत्राह । अविस्मितं निरहंकारं कुतूहलशून्यं वा अप्रतारकमित्यर्थः कुतः प्रशान्तं रागादिशून्यं तच्च कुतः स्वेनैव लाभेन परिपूर्णकामं तच्च कुतः सममुपाधिशून्यं परिच्छेदशून्यं एवं भूतं परमेश्वरं विना अपरं यः शरणार्थमुपसर्पति स हि बालिशो अज्ञः येतोऽसौ शुनो लांगुलेन समुद्रमतितितर्ति अतितर्तुमिच्छतीत्यर्थः यथा तेन समुद्रतरणं न भवति तथा निरीश्वराश्रयेण व्यसनार्णवतरणं न संभवतीत्यर्थः ॥ ५ ॥

बालस्य नेह शरणं पितरौ नृसिंह नार्तस्य चागदमुदन्वति मज्जतो नौः ।
तप्तस्य तत्प्रतिविधिर्य इहांजसेष्टस्तावद्विभो तनुभृतां त्वदुपेक्षितानाम् ॥ ६ ॥

( ७ । ९ । १९ प्रह्लादः )

ननु दुःखैस्तप्तस्य तत्प्रतीकारो लोकेन प्रसिद्ध एव वेदेपि तत्तद्देवताभक्तिः प्रसिद्धा । अतः कथं भगवान् एव शरणं तत्राह । प्रह्लादवाक्येन बालस्य नेति । भो नृसिंह तप्तस्य तत्प्रतिविधिस्तत्प्रतीकार इह लोके योऽञ्जसा इष्टः स त्वयोपेक्षितानां तावदेवक्षणमात्रमेव न त्वात्यंतिकस्तदेवाह । बालस्य पितरौ शरणं रक्षकाविह न भवतः ताभ्यां पाल्यमानस्यापि दुःखदर्शनात् । क्वचिदजागर्तादिषु ताभ्यामेव तद्वधदर्शनाच्च । आर्तस्य रोगिणः अगदमौषधं शरणं कृतेप्यौषधे मृत्युदर्शनात् । उदन्वति समुद्रे मज्जतः पुंसो नौः शरणं तया सह मज्जनदर्शनात् अतस्त्वमेव शरणमित्यर्थः । अथवैवं व्याख्येयं तप्तस्य प्रतिविधिर्य इह तावत्प्रसिद्धः स त्वदुपेक्षितानां किं अंजसेष्टः अपि तु नेष्ट एव । यद्वा । यस्तावदिह प्रतिविधिरिष्टः स किं अंजसा । नेत्यांजसेति योज्यम् । बालस्येत्यादि पूर्ववदेव ॥ ६ ॥

कः पंडितः त्वदपरं शरणं समीयाद्भक्तप्रियादृतगिरः सुहृदः कृतज्ञात् ।
सर्वान् ददाति सुहृदो भजतोऽभिकामानात्मानमप्युपचयापचयौ न यस्य ॥ ७ ॥

( १० । ४८ । २६ अक्रूरः )

तस्माद्भगवन्तं विहाय यः परमाश्रयेत् स मूर्ख इत्याह अक्रूरवाक्येन कः पंडित इति । त्वत्परं त्वत्तोन्यं कः पंडितः सन् अपंडित इत्यर्थः । ऋतगिरः सत्यवाचस्त्वत्तोपरं शरणं कः समीयात् गच्छेत् । कथंभूतात् त्वत्तः । सुहृदः निरपेक्षोपकारकात् यो भवान् भजतः सुहृदः सर्वानभिमतान् कामान् ददाति । किंच आत्मानमपि । यस्य तव उपचयापचयौ न स्तः ॥ ७ ॥

अहो बकीयंस्तनकालकूटं जिघांसयापाययदप्यसाध्वी ।
लेभे गतिं धात्र्युचितां ततोन्यं किंवा दयालुं शरणं व्रजेम ॥८॥
( ३ । २ । २३ उद्धवः )

ननु परमेश्वरशरणमात्रेण कथमेतावन्निश्रेयांसि दयालुत्वात्समर्थत्वाच्च भगवत इत्याह उद्धववाक्येन । अहो इति । अहो आश्चर्यं दयालुतायाः हन्तुमिच्छयापि स्तनयोः संभृतं कालकूटं विषं यमपाययत् बकी पूतना साध्वी दुष्टचित्ता धात्र्या यशोदाया उचितां गतिं लेभे भक्तवेषमात्रेण यः सद्गतिं दत्तवान् इत्यर्थः ततोऽन्यं कं वा भजेम स एव शरणमित्यर्थः ॥ ८ ॥

तापत्रयेणाभिहतस्य घोरे संतप्यमानस्य भवाध्वनीश ।
पश्यामि नान्यशरणं तवांघ्रिद्वन्द्वातपत्रादमृताभिवर्षात् ॥९॥
( ११ । १९ । ९ उद्धवः )

तदेव स्पष्टयति उद्धववाक्येन तापत्रयेति । तापत्रयेणाभिहतस्य अतएव संतप्यमानस्य पुंसः तवांघ्रिद्वन्द्वातपत्रादन्यच्छरणं न पश्यामि नास्तीत्यर्थः । न केवलं आतपत्रात् किंच अमृतमप्यभितो वर्षति यत् तस्मात् ॥ ९ ॥

चिरमिह वृजिनार्तस्तप्यमानोनुतापैरवितृषषडमित्रोऽलब्धशान्तिः कथंचित् ।
शरणद समुपेतस्त्वत्पदाब्जं परात्मन्नभयमृतमशोकं पाहि मापन्नमीश ॥१०॥
( १० । ५१ । ५७ मुचुकुन्दः )

तदेव मुचुकुंदवाक्येन शरणं प्रविशन् ग्रन्थमुपसंहरति चिरमिति हे ईश आपन्नं आपद्ग्रस्तं मा मां पाहि यतस्ते पदाब्जं अहं शरणं समुपेतः हे परमात्मन् हे शरणदेति प्रकृतोपयोगि कथं भूतोहं संसारे चिरं वृजिनैः कर्मफलैः आर्तः पीडितः अनुतापैः वासनाभिः तप्यमानः । अत एव अवितृषाः अवितृप्ताः षट्चक्षुरादयोऽमित्रा यस्य अतएव क्वाप्यलब्धशांतिः कथंभूतं त्वत्पदाब्जं अभयं सर्वतोभयशून्यम् । ऋतं अविनाशि । अतएव अशोकम् ॥ १० ॥

एवं श्रीश्रीरमण भवता यत्समुत्तेजितोहं
चांचल्ये वा सकलविषये सारनिर्द्धारणे वा ।

आत्मप्रज्ञाविभवसदृशैस्तत्र यत्नैर्ममैतैः

साकं भक्तैरगतिसुगते तुष्टिमेहि त्वमेव ॥११॥

तदेवं स्वकर्मग्रथनफलं भगवति समर्पयति । एवमिति । चांचल्ये इदं बाल्यकृतं परमार्थनिरूपणम् वा तत्तु त्वत्प्रेरणेनैव अतस्त्वदाज्ञापरिपालिना तथा च त्वमेव भक्तसहितः प्रीतो भवत्वर्थयामीत्यर्थः ॥११॥

साधूनां स्वतएव संमतिरिह स्यादेव भक्त्यार्थिना

मालोक्य ग्रथनश्रमं च विदुषामस्मिन् भवेदादरः ।

ये केचित्परकृत्युपश्रुतिपरास्तानर्थये मत्कृतिं

भूयो वीक्ष्य वदंत्ववद्यमिह चेत्सा वासना स्यास्यति ॥१२॥

स्वग्रंथे सर्वसंमतियोग्यतामाह । साधूनामिति । इह भक्तिरत्नावल्यां साधूनां भक्तानां संमतिः पाठचिंतनादि परिग्रहाय स्वीकारः स्यादेव यतः भक्त्यर्थिनां यथा विषयिनां तत्प्रशंसायां विदुषां युक्तिपरिशीलनशीलानां तादृशभक्तिहीनानामपि अस्मिन् ग्रंथे आदरो भवेदेव । कथंकारं मम ग्रंथे नानाप्रकरणश्लोकानां परस्पराकांक्षया लिखने श्रमं आलोच्य विचार्य्य कश्चिन्ममाकृशांकायामपि आदरो भवेदेव । ये तु केचित् विरलाः परकृतीनां उपश्रुतिपराः निंदापरास्तानहं अर्थये याचे किं तत् । इमां मत्कृतिं भूयो वारं वारं वीक्ष्य भवन्तः इहं मत्कृतौ अवद्यं दूषणं तदा वदंतु चेत् यदि एतावत् सुभक्तिमहिमसु श्रोतेषु सा वासना परनिंदेच्छा स्यास्यति । अयमर्थः बहुधैतद् ग्रंथपरिशीलनेन भगवद्भक्तिरेव उदेष्यति ततश्च कुतः परनिंदादिदुर्वासना इति भावः ॥ १२ ॥

एष स्यामहमल्पबुद्धिविभवोप्येकोपि कोऽपि ध्रुवम्

मध्ये भक्तजनस्य मत्कृतिरियं न स्यादवज्ञास्पदम् ।

किं विद्याः शरघाः किमुज्ज्वलकुलाः किं पौरुषं किं गुणा-

स्तत्किं सुंदरमादरेण रसिकैर्नापीयते तन्मधु ॥ १३ ॥

इदानीं स्वदोषमंगीकृत्यैव ग्रंथमहिम्नैव सर्वोपादेयत्वं ग्रंथस्याह । एष स्यामहमिति । एषोहं अल्पो बुद्धिविभवो यस्य सोपि एकोपि शिष्यगुर्वादिगोष्ठीमत्तिप्रात्याप्यल्पमपि परदेशाप्रसिद्धकुलशीलादिरपि स्यामेव । तथापि इयं भगवद्भक्तिविषया मत्कृतिः भक्तजनसभासु अवज्ञास्पदं उपेक्षाविषयो न स्यात् आदृतैव स्यात् स्वमाहात्म्यात् । अत्र दृष्टान्तः शरघाः मधुमक्षिकाः किंविद्याः का विद्या यासां किं वा उज्ज्वलं कुलं किं वा पौरुषं पराक्रमः परोपकारादिः को वा गुणाः शमदमादिर्यासां न किमपीत्यर्थः । तथापि तन्मधु ताभिः संचितं मधु स्वभावतः सुंदरं यतः अतएव आदरेण श्रद्धादिना रसिकै-

विशै र्नापीयते अपि तु पीयते, एवेत्यर्थः । तदेवमौद्धत्यपरीहारोपि द्रष्टव्यमितिसर्वरमणीयमिति ॥ १३ ॥

इति श्रीभक्तिरत्नावलीटीकाकान्तिमाला समाप्ता ॥ शुभमस्तु ॥

आदर्शपुस्तकलेखसमयः संवत् १६९९

इत्येषा बहुयत्नतः खलु कृता श्रीभक्ति-रत्नावली ,
तत्प्रीत्यैव तथैव सम्प्रकटिता तत् कान्तिमाला मया ।
अत्र श्रीधरसत्तमोक्तिलिखने न्यूनाधिकं यत्त्वभूत् ,
तत्क्षन्तुं सुधियोऽर्हत स्वरचना लुब्धस्य मे चापलम् ॥ १ ॥
वाराणस्यां महेशस्य सान्निध्ये हरिमन्दिरे ।
भक्तिरत्नावली सिद्धा सहिता कान्तिमालया ॥ २ ॥
महायक्ष-शर-प्राण-शशाङ्कगणिते शके ।
फाल्गुने शुक्लपक्षस्य द्वितीयायां सुमङ्गले ॥ ३ ॥

# भक्तिरत्नावली

भक्तिरत्नावली श्रीमद्भागवत की भगवद्भक्तिविषयिणी उक्तियों का संग्रह है। इस संग्रह को विष्णुपुरीनामक संन्यासी ने रचा था। विष्णुपुरीजी मिथिलावासी थे, इतना तो उनके अपने कथन से मिलता है। पर उनके समय का निरूपण करना कुछ कठिन है। एक प्रवाद किसी किसी के मुख से सुनने में आता है कि विष्णुपुरीजी श्रीचैतन्य प्रभु के समय में थे। चैतन्य प्रभु का नवद्वीप (नदिया) में १४०७ शक में आविर्भाव हुआ था। सो चार सौ वर्ष के लगभग का समय स्वामी जी का इस गिनती से है। कहते हैं कि चैतन्यजी जब काशी जी की तीर्थयात्रा में गये थे तब विष्णुपुरीजी उसी समय वहाँ वास करते थे। इन दोनों का परस्पर सम्मिलन वहाँ हुआ था। फिर जब कई वर्ष पीछे चैतन्यजी जगन्नाथजी की पुरी में वास करने लगे तब काशी के एक यात्री ने जाकर उनसे भेंट की थी। उसने विष्णुपुरी जी का कुशलसमाचार दिया और कहा कि स्वामी जी ने पूछा है कि जो कुछ आप इच्छा करें सो आपके लायक काशी से मैं भेज दूँ। उन्होंने कहा कि मुझको एक रत्नावली भेज दें। सब वैष्णवमण्डल जो पास बैठे थे विस्मित हो गये कि महाप्रभु जी ने कैसी वस्तु माँगी, खुद संसारत्यागी विरक्त हैं, और विष्णुपुरीजी भी संन्यासी हैं। भक्तिरत्नावली का माँगना इससे कहाँ तक उचित था। खैर सब कोई चुप रह गये। यात्री भी विदा होकर काशी को चला आया। कुछ काल पीछे फिर वही यात्री पुरी में जा पहुँचा और प्रभुजी से भेंट की, और भक्तिरत्नावली की पोथी आगे धर दी। पुस्तक को सिर पर रख बड़े प्रेम से यात्री को प्रभुजी ने आलिङ्गन किया। कहा कि जैसी रत्नावली मैंने माँगी थी वैसी ही मिली। तब वैष्णव लोग जो पहले प्रभुजी के माँगने से चिढ़े थे अब उनको सराहने लगे और मन में लज्जित हुए कि प्रभुजी ने तो ऐसी रत्नावली माँगी थी। हमारी ही समझ में भूल थी। फिर उस पुस्तक को लेकर प्रभुजीने श्रीजगन्नाथजी के चरणों पर रख दिया। क्योंकि रत्नावली उन्हीं के लिये माँगी थी।

पर यह वार्त्ता कहाँ तक सच है इसका कोई प्रमाण नहीं मिलता॥

बङ्गाक्षरों में मुद्रित पुस्तक में अन्त में ३ श्लोक अधिक छपे हैं जो इस संस्करण के आदर्श १६९९ संवत् की लिखी देवाक्षर की पोथी में नहीं हैं। उन श्लोकों में ग्रन्थ-रचना का समय दिया है। काशीजी में १५५५ शक में रत्नावली और टीका कान्तिमाला

रची गई थी, यह उसमें लिखा है। बङ्गाक्षरी पुस्तक के सम्पादकों की राय है कि यह श्लोक किसी लेखक का है न कि विष्णुपुरीजी का। ऐसी शैली है कि लेखक (नक़ल-नवीस) अपना लिखने का समय डाल देते हैं। पर श्लोक में "सिद्धा" यह पद दिया है। सिद्धा से रचिता अर्थ सुसङ्गत जान पड़ता है न कि लिखिता। यदि ये तीन श्लोक विष्णुपुरीजी के मान लिये जावें तो श्री चैतन्यदेव से उनके सम्मिलन की कथा असम्भव है। क्योंकि १५५५ शक के पहले ही प्रभुजी का तिरोभाव हो गया था।

भागवत के प्रसिद्ध टीकाकार श्रीधरस्वामी जी के समय के पीछे विष्णुपुरीजी ने भक्तिरत्नावली की रचना की थी, यह भी ठहरता है। क्योंकि इन्हीं तीन श्लोकों में से एक श्लोक में श्रीधरस्वामी का उल्लेख भी है। कान्तिमाला टीका के बनाने में विष्णुपुरीजी ने श्रीधरस्वामी की टीका का कुछ न्यूनाधिक्य किया था, उसके लिये क्षमा प्रार्थना की है। उस श्लोक से ऐसा भाव प्रकट होता है। जीव गोस्वामीजी ने अपनी भागवत की "क्रम-सन्दर्भ" नामक टीका में श्रीधर स्वामी का उल्लेख किया है। जीव गोस्वामी चैतन्यजी के प्रशिष्य थे। जब उनके समय में श्रीधरजी की प्रसिद्धि थी तब श्रीधरजी के प्राचीनत्व में क्या सन्देह है? और जब जीव गोस्वामी ने भागवत की टीका की रचना करते समय श्रीधर की टीका रहने पर अपनी टीका बनाने का कारण दिखाया है तो विष्णु-पुरीजी ने भी कान्तिमाला की रचना करते समय क्षमा माँगी है यह भी संगत मालूम होता है। पर इससे भी कान्तिमाला के समय का ठीक ठीक पता नहीं मिलता।

अब रह गई कुछ विद्वान् वङ्गदेशीय वैष्णवों की राय, जो इन श्लोकों को विष्णुपुरी के नहीं मानते। उन्होंने इस बात को सिद्ध करने में यत्न किया है कि चैतन्यजी के बहुत पहले विपुष्णुरीजी का जन्म हुआ था। पर १५५५ शक का स्पष्ट कथन है, इसका अपलाप वे लोग कैसे कर सकते हैं। किसी लेखक का यह श्लोक है, यह कहना ज़बरदस्ती मालूम होता है। विष्णुपुरी जी की प्रसिद्धि नाभा जी के समय में अच्छी होगई थी। क्योंकि भक्तमाल में उनका उल्लेख है, और चैतन्यदेव का भी है। नाभा जी इन दोनों के पीछे हुए थे। इससे विष्णुपुरी के प्राचीनत्व में प्रमाण मिलता है पर ठीक ठीक समय का निरूपण नहीं होता। उनके रचित श्लोकों ही को प्रमाण मानना चाहिये। इन श्लोकों में न केवल तारीख़ पुस्तकरचना की दी गई है पर स्थान भी लिखा है कि काशी जी में विश्वेश्वर जी के मन्दिर के पास विष्णुपुरी जी ने इसे लिखा था। इस कथन का समर्थन भक्ति-रत्नावली के तेरहवें विरचन के अन्तिम श्लोक से होता भी है। कान्तिमाला में इस श्लोक की व्याख्या में सूचित है कि जहाँ ग्रन्थ समाप्त हुआ था वहाँ वे पर-देशी थे। सो यह भी मिलता है कि ये मिथिला के वासी थे। संन्यासी होकर पीछे काशी वास किया था। वहाँ इनको पहिले कौन जानता रहा। प्रसिद्धि तो पीछे भक्तिरत्नावली की रचना से हुई। यहाँ तक बढ़ी कि भक्तमाल में इनका नाम चढ़ गया।

इससे अधिक ग्रन्थकर्ता के बारे में या ग्रंथ के समय के बारे में सामग्री नहीं मिली। अब भक्ति के विषय में कुछ कहना उचित समझा जाता है।

## भारतवर्ष में भक्तिमार्ग का प्रचार बहुत प्राचीन काल से चला आता है।

डाक्टर ग्रियर्सन साहब विहार में कलेक्टर थे, अब पेन्शन लेकर विलायत चले गये हैं। यह बड़े भाषाभिज्ञ हैं। हिन्दी में प्रवीण हैं। तुलसीकृत रामायण को तो अच्छी तरह से पढ़ा था और गोसाईं जी को तो गुरु करके मानने लगे थे। जिन पण्डितों से ये पढ़ते थे वे तो यही समझते थे कि ग्रियर्सन साहब रामभक्त होगये। पर कुछ दिन हुए इन्होंने एक प्रबन्ध लिख कर रायल एशियाटिक सोसाइटी की सभा में पढ़ा था। उसमें साहब ने यह साबित करना चाहा कि भगवद्भक्ति को भारतवर्ष में ईसाइयों ने फैलाया है। पहले नहीं थी। ईसामसीह के एक शिष्य सेन्ट टामस नामक धर्मप्रचारक भारतवर्ष में आकर दक्षिण देश में मद्रास होता में पहुँचे थे। वहाँ उन्होंने अपना मज़हब फैलाया, और भक्तिमार्ग तभी से भारतवर्ष में फैला। पीछे भक्तिमार्ग दक्षिण से तमाम भारतवर्ष में फैल चला। इसके पहले हिन्दुओं में भक्तिमार्ग नहीं जारी था।

डाक्टर ग्रियर्सन के पहले भी डाकृर लोरिनअर नाम एक जरमनी के विद्वान् ने अपने भगवद्गीता के अनुवाद में ऐसी ही बात पहले पहल उठाई थी कि न्यूटेस्टामेंट के बहुत उपदेश गीता में पाये जाते हैं, न्यूटेस्टामेंट प्राचीन है, गीता पीछे रची गई है। एक प्रबन्ध इसी भाव का इण्डियनआंटिकेरी नामक मासिकपत्र में भी १८७३ अक्टोबर के नम्बर में छपा था। कोई कोई उस ज़माने के प्रसिद्ध संस्कृतज्ञ साहब लोग इस मत को मानने लगे। पर डाकृर जान म्यूर साहब ने इस बात को स्वीकार नहीं किया। जरमनी के महापण्डित डाकृर लासन और विटलिंक और और विद्वान् लोगों ने भी डाकृर म्यूर का समर्थन किया। ईसामसीह के पहले भक्तिमार्ग भारत में प्रचलित था, यह ग्रीक ऐतिहासिक मेगास्थिनीज़ के लेख से प्रमाणित होता है। मेगास्थिनीज़ ग्रीक अधिपति सिल्यूकस का राजदूत (एलची) था और उसने मगधेश्वर चन्द्रगुप्त की राजधानी पटलिपुत्र में बहुत दिन वास किया था। इनके लेख से यह मिलता है कि श्रीवासुदेव की उपासना सौरसेनियों में मथुरा प्रदेश में प्रचलित थी। यह लेख ईसामसीह के क़रीब तीन सौ वर्ष पहले का है।

### शिलालिपि से प्राचीनत्व का प्रमाण।

कुछ वर्ष हुए आरकियालाजिकल महकमा (Archæological Department) की खुदाई में कई एक मूर्त्तियों और लेखों का आविष्कार हुआ है जिससे ईसामसीह के पहले वासुदेव की उपासना का स्पष्ट प्रमाण पाया जाता है। एक गरुड़ध्वज मूर्त्ति मिली है जिसको हिलियोडोरस नाम के किसी ग्रीक एलची तक्षशिलानिवासी ने बनवा कर स्थापित किया था। यह ईसामसीह के डेढ़ सौ वर्ष पहले की वार्त्ता है। वह भगवान् वासुदेव का उपासक था। इन सब शिला, आकार और मूर्त्तियों को सर्कारी अफ़सरों ने ज़मीन से खोद कर निकाला है। यह किसी हिन्दू की कल्पना का जाल नहीं है। अब देखना चाहिए इन ऐतिहासिक लेखों और आविष्कारों से क्या बात

पाई जाती है। विना भक्ति के वासुदेव की उपासना कैसे सम्भव है। अतएव भक्तिमार्ग भारतवर्ष में ईसामसीह के सैकड़ों वर्ष पहिले प्रचलित था। डाकृर लोरिनज़र और डाकृर ग्रियर्सन की उक्तियाँ निर्मूल हैं। जिन प्रमाणों से यह प्राचीनत्व सिद्ध हुआ वे यूरोपियन विद्वद्वरों के ग्राह्य हैं। इन लोगों के पक्षपात की कोई सम्भावना नहीं। डाकृर जान म्यूर जब हिन्दुस्तान में थे तब तो कट्टर मिशनरी पादडी जैसे थे। भला उनका पक्षपात हिन्दुओं के साथ कैसे हो सकता है? उन्होंने तो सत्य की दृष्टि से अपनी राय को स्वतन्त्र निर्भय होकर प्रकाश किया है।

आरकियालाजिकल महकमे (Archæological Department) के बड़े अफ़सर अँग्रेज़ होते हैं। उनकी भी जालसाज़ी की सम्भावना नहीं है। वे तो पुराने भीटों को खोद खोद मूर्तियों को और प्रस्तर लेखों को निकालते हैं। सच्ची बात तो यह है कि सत्य का अपलाप नहीं हो सकता। कुछ दिन के लिए चाहे सत्य ढँक जाय, पर अन्त में प्रकट होकर चमकने लगता है।

## भगवद्गीता ईसामसीह के पहले की है।

भगवद्गीता को जिसमें भक्तियोग नाम का स्वतन्त्र पूरा अध्याय दिया है और भगवत्प्रपत्ति का उपदेश स्थान स्थान में अर्जुन को भगवान् ने सुनाया है, डाकृर लोरिनज़र नेऽयूटेस्टामेंट की नक़ल समझा है। इसका भी डाक्टर जान म्यूर प्रभृति विद्वानों ने खण्डन किया है। गीता के प्राचीनत्व में एक नूतन प्रमाण मिला है। बहुभाषाभिज्ञ कलकत्ते की इम्पीरियल लाइब्रेरी के भूतपूर्व लाइब्रेरियन विद्वद्वर हरिनाथ दे ने गीता का अनुवाद चीन भाषा में देखा था। वह ईसामसीह के दो सौ वर्ष पहले रचित हुआ था। हरिनाथ जी की इच्छा थी कि उसका अनुवाद अँग्रेज़ी में निकले। पर उनकी अकालमृत्यु हो जाने से यह अभिलाषा पूर्ण नहीं हुई।

अब पाठक देखें कि प्रमाणों के ऊपर प्रमाण गीता के प्राचीनत्वसमर्थक मिलते हैं।

### भक्तिमार्ग।

अब भक्ति के विषय में दो एक बात कह कर इस उपोद्घात को समाप्त करेंगे। भक्ति की परिभाषा नारद सूत्र में ऐसी है :—

"सा त्वस्मिन् परमप्रेमरूपा" अर्थात् परमेश्वर में अत्यन्त प्रेम को भक्ति कहते हैं। यही बात शाण्डिल्यसूत्र में लिखी है "सा परानुरक्तिरीश्वरे" अर्थात्—परमेश्वर में परम अनुराग भक्ति है। सो यह भगवत्प्रेम और परानुरक्ति आस्तिक्य मत का हृदय है। भगवान् के सहस्र नाम और सहस्र रूप हैं। किसी नाम का जप, किसी रूप का ध्यानस्तव गान सब भक्ति का सूचक है। ऐसी सूचना का अभाव सनातन समय से भारतवर्ष में नहीं है कि उस अभाव की पूर्ति बाहर से ईसामसीह के उपासकों से हुई हो। यज्ञादि कर्म्म विना भक्ति के नहीं अनुष्ठित हो सकते। हां सकाम होकर और निष्काम होकर भगवदाराधना की जाती है। निष्कामोपासना ही मुख्य है। उसी की स्तुति भाष्यादि में की है। और कर्म्मकाण्ड की निन्दा की उक्ति जहां कहीं देख पड़ती है यह

